खण्डनाय तमोराशेर्मण्डनाय सदध्वनः ।
चण्डभानुरिवोदीतः पुण्डरीकाक्षदीक्षितः ॥ ८० ॥

॥ ग ॥ यश्च जगदशेषाञ्चितवृत्तिमवामनावतारसमुल्लसित-कीर्तिमजातबलिविद्वेषमजनितकाममपरिचितजलाशयमपरं पुण्ड-रीकाक्षममन्यत ॥

खण्डितं कलयाञ्चक्रे पण्डितंमन्यडम्बरम् ।
चण्डरीतिजुषा वाचा पुण्डरीकविलोचनः ॥ ८१ ॥

वेदसिन्धुजनितैर्विशृंखला-
मोदवर्षिभिरसौ विशेषवित् ।
आरराध बहुभिर्मखाम्बुजैः
वारिराशितनयाविलासिनम् ॥ ८२ ॥

हविर्ग्रहणकौतुकी जलधिकन्यकाकामुको
यदध्वरवसुन्धरां ध्रुवमुपेत्य सानुग्रहः ।
समिज्ज्वलनसङ्गमक्षणसमृद्धधूमावली-
मिलन्मुखतया चिरादरुणलोचनोऽजायत ॥ ८३ ॥

यद्यज्ञहविरास्वादप्रारचय्य मुहुर्मुहुः ।
अच्युता हन्त तान्ताऽपि पुष्टिं कामप्यविन्दत ॥ ८४ ॥

यस्यार्कमावृण्वति यज्ञधूमे
प्राप्येव सर्वेऽप्युपरागशङ्काम् ।
कुतूहलाब्धौ कलितावगाहाः
मन्त्रान्प्रशंसोक्तिमिषेण जेपुः ॥ ८५ ॥

विललास यदध्वरानलो
विपुलं धूमभरं विजृम्भयन् ।
जगतीकलुषव्रजं जवा -
दुपभुक्त पुनरुद्वमन्निव ॥ ८६ ॥

आस्वाद्य यस्याध्वरहव्यवाहो
हर्षोपनीतानि मुहुर्हवींषि ।
कुतूहली लोलशिखाकलापः
कुर्वन् शिरःकम्पमिव व्यलासीत् ॥ ८७ ॥

व्यनिषजद्धृतवर्षविजृम्भणे
विसृमरे मखमन्त्रघनध्वनौ ।
प्रतिकलं प्रणनर्त मुदा शिखी
प्रचलहेतिकदम्बककैतवात् ॥ ८८ ॥

बहुधा जृम्भितज्वालो बभौ यस्य मखानलः ।
हर्तुं जगदघस्तोमं जिह्वां विस्तारयन्निव ॥ ८९ ॥

सरसोक्तिसुधावर्षैस्सतां हृदयकैरवम् ।
विकासभरितं तन्वन् विरेजे स कलानिधिः ॥ ९० ॥

इति कौशिककुलतिलकश्रीवेङ्कटेशदेशिकतनयस्य
परवस्तु वेङ्कटगुरुचरणजलजषट्चरणान्तःकरणस्य
कवितार्किकसिंहस्य
वेदान्ताचार्यापरनामधेयस्य कृतौ

## वेदान्ताचार्यविजये चम्पूप्रबन्धे
## प्रथमः स्तबकः

कल्पद्रुः कविवादिसिंहविदुषः प्रज्ञासुधावारिधेः
जातः कश्चन कल्पितार्थविततिश्चम्पूप्रबन्धात्मना ।
अस्याम्नायकिरीटदेशिककथामाध्वीझरीमुद्वह -
न्नाद्योऽयं स्तबकः करोतु सुमनःकर्णावतंसश्रियम् ॥



अथ

# वेदान्ताचार्यविजये चम्पूप्रबन्धे
# द्वितीयः स्तबकः



अनन्ततपसस्तस्मादनन्तगुरुरुद्ययौ ।
चिन्तामणिर्यथा सिन्धोश्चिन्तितार्थप्रदस्तथा ॥ १ ॥

ग ॥ अथ पुण्डरीकाक्षदीक्षितो लब्धवर्णपरिबृढो
धवर्णपरिपठनधाटीजितघोटीजवमनवीनगुरुकुञ्जरकलित -
लस्तुतिशतपरिचयाह्लादमतिवेलं जनयन्तं कालं च
न्तं बालं तनयं तमपनीतदोषमुपनीय विविधवाक्प्रपञ्च-
शीलनकृते वसन्त इव कोकिलं, वारिद इव केकिनमा-
देश । स च,

अध्यैष्ट वेगादनपायवाणी-
मजीगणत्काव्यकलाकलापान् ।
अबोधि काणादवचोविशेषा-
नलब्ध पातञ्जलिसूक्तिपारम् ॥ २ ॥

सरसोक्तिसुधावर्षैस्सतां हृदयकैरवम् ।
विकासभरितं तन्वन् विरेजे स कलानिधिः ॥ १० ॥

इति कौशिककुलतिलकश्रीवेङ्कटेशदेशिकतनयस्य
परवस्तु वेङ्कटगुरुचरणजलजषट्चरणान्तःकरणस्य
कवितार्किकसिंहस्य
वेदान्ताचार्यापरनामधेयस्य कृतौ

## वेदान्ताचार्यविजये चम्पूप्रबन्धे
## प्रथमः स्तबकः

कल्पद्रुः कविवादिसिंहविदुषः प्रज्ञासुधावारिधेः
जातः कश्चन कल्पितार्थविततिश्चम्पूप्रबन्धात्मना ।
अस्याम्नायकिरीटदेशिककथामाध्वीझरीमुद्वह -
न्नाद्योऽयं स्तबकः करोतु सुमनःकर्णावतंसश्रियम् ॥



अथ

# वेदान्ताचार्यविजये चम्पूप्रबन्धे
## द्वितीयः स्तबकः



अनन्ततपसस्तस्मादनन्तगुरुरुद्ययौ ।
चिन्तामणिर्यथा सिन्धोश्चिन्तितार्थप्रदस्तथा ॥ १ ॥

ग ॥ अथ पुण्डरीकाक्षदीक्षितो लब्धवर्णपरिबृढो लब्धवर्णपरिपठनधाटीजितघोटीजवमनवीनगुरुकुञ्जरकलित-मञ्जुलस्तुतिशतपरिचयाह्लादमतिवेलं जनयन्तं कालं च नयन्तं बालं तनयं तमपनीतदोषमुपनीय विविधवाक्प्रपञ्च-परिशीलनकृते वसन्त इव कोकिलं, वारिद इव केकिनमा-दिदेश । स च,

अध्यैष्ट वेगादनपायवाणी-
मजीगणत्काव्यकलाकलापान् ।
अबोधि काणादवचोविशेषा-
नलब्ध पातञ्जलिसूक्तिपारम् ॥ २ ॥

अनन्तपदपङ्कजस्फुरदनादिसूक्तिच्छटा-
मरन्दरसधोरणीमधुरिमैकबद्धस्पृहः ।
स बम्भर इव स्वयं स्मृतिजधर्मजाताश्रयः
प्रमोदभरमातनोदुदधिसोदरं योगिनाम् ॥ ३ ॥

अस्मादुपन्यस्तपदक्रमेण
विस्मापिताशेषजनादनन्तात् ।
धर्मैकसिद्धा धरणिं पुनाना
मन्दाकिनो कीर्तिमयी बभूव ॥ ४ ॥

तर्काध्वन्यबुधावलीमदमुधापाथोधिमुष्टिन्धयान्
तत्ताद्दक्षयतीन्द्रसूक्तिमहिलाधम्मिल्लमल्लीसरान् ।
वाग्गुम्भान् विभराम्बभूव स गुरुर्वाचालवेधोवधू-
केलीकोरधुरोणनिस्वनसुधासन्देहसन्दायिनः ॥ ५ ॥

आत्रेयान्वयकोर्तिकैरववनोराकानिशाकामुकः
प्रज्ञायाः प्रथमावतारसरणिः श्रीरङ्गराजो गुरुः ।
पद्मामब्धिरिवाच्युताय मनसा धन्येन कन्यां ददौ
तस्मै स्मेरयशःप्रसूननिकरैराशां परिष्कुर्वते ॥ ६ ॥

चञ्चरीक इव मञ्जरीं नवां
शारदीमिव च कौमुदीं विधुः ।

वादिहंसजलदार्यसोदरी-
मभ्युपेत्य स गुरुर्व्यरोचत ॥ ७ ॥

मानयन् स यतीशानमाहानसिकपौत्रजाम् ।
आदिपूरुषदैवाज्ञाचोदितेषु मनो दधौ ॥ ८ ॥

ग ॥ तस्य पुनरखिलकलाकल्लोलिनीजननशैलस्य कमलाकमनचरणखुरलीविहरमाणमनोमल्लस्य प्रपदनपथ-जंघालपरिषदन्तरङ्गमयूरमुदिरस्य नाथादिमगुरुसंप्रदायसुर-महीरुहालवालस्य तत्रभवतोऽनन्तसूरेरन्तेवासिजनान्तःकरण-रथचरणसुखवितरणपटुनिगममकुटयुगलवचनरविकिरणभा-सुरा वासराः स्वच्छन्दं निरगच्छन् ॥

कदाचिदन्तः कमलासहायं
विन्यस्य विख्यातिजुषां वरोऽसौ ।
मेधासमुद्रोद्धृतमौनमुद्रो
मोदान्निदद्रौ सुधियां सुरद्रुः ॥ ९ ॥

तदा तस्य गुरोश्चक्षुस्तद्व्यापारौ सह स्थितौ ।
निद्रा वियोजयामास निशा रथपदाविव ॥ १० ॥

भाविस्वप्ने भगवतो भारतीं श्रोतुमन्तरम् ।
प्रदातुमिव वाचाऽस्य प्राप मौनमयं व्रतम् ॥ ११ ॥

ग ॥ तत्रान्तरे निजसङ्कल्पानुगुणतया जायमान निखिलजगतीव्यापारबिलुलोकिषयेव तुङ्गतरभुजङ्गश्रृङ्गिश्रृङ्ग-रचितवासो रमानिवासोनाम भगवान् अनुरञ्जितयुञ्जानहृदयां दयां, विधुरिव सुधां, वीचिमिव जलधिः, वासर इव विभात-वेलाम्, प्रत्यय इव प्रकृतिं, प्रसूननिवह इव वासनां पुर-स्कुर्वन्, विततमदभरितसुगतमतपथिकोक्तयुक्त्या, वारिरुहव-न्यामिव हिमान्या, हन्यमानामनादिगिरमुल्लासयितुं, प्रदोषे-णेव प्रकटिततमसा, दुर्योधनेनेव दूषितधर्मजातेन, व्यालेनेव विषमहितेन, दन्तिनेव दर्शितमदवर्षेण, चरमयुगेन, वातूलेन बलाहकानिव विशीर्णान् वर्णाश्रमधर्मान् सम्मेलयितुं परावरविवेचनपरायणबादरायणफणितिलतिकास्तबकमपा - कृतसंसरणवरुणालयतरणानिपुणशोकं कंचन श्लोकं चन्दनतरुमहिगणानिव व्यावृण्वानानहितोदीरितानपार्थान् अपाकर्तुं, दुर्मतिशबरधिषणाधनुर्मुक्तदुस्तरकलम्बकदम्बसंपा-तमूर्छितां मन्वादिफणितिहरिणीमुच्छ्वासयितुमपि महत्तर-महिमशालिनी मदीया घण्टा महीतले जनयितव्येति जनि-ताभिलाषः सन्, समापितोचितसपर्यया भार्यया समं निद्राणस्य तस्यानन्तसूरेः त्रिचतुरघटिकावशेषितनिशायां स्वप्नदशायां नयनपदवीमारुरोह ॥

अस्वप्नसुलभः श्रीमानञ्जनाद्रिनिकेतनः ।
बभूव स्वप्नसुलभो बहुपुण्यनिधेर्गुरोः ॥ १२ ॥

निरर्गलपरिस्फुरन्निजमरीचिकावीचिभि
र्दिशन्तमिव दिग्वधूमृगमदानुलेपश्रियम् ।
पुरो गिरितटीकनत्कुटकिनीसुहृन्मण्डली-
कचाकचिधुरंधुरं किमपि रत्नमाबिभ्रतम् ॥ १३ ॥

लक्ष्मीकुचपरीरम्भलग्नकस्तूरिकोपमम् ।
श्रीवत्समद्भुतश्रीकमुद्वहन्तमुरस्थले ॥ १४ ॥

कौस्तुभाम्बुरुहाघ्राणकौतूहलसमागतैः ।
आवहन्तमलिस्तोमैस्तुलितांस्तुलसीसरान् ॥ १५ ॥

बाहुनालाञ्चलोदञ्चत्पाञ्चजन्यसिताम्बुजम् ।
देहदीधितिकालिन्दीसौगन्धिकसुदर्शनम् ॥ १६ ॥

कङ्केलिकोरकविसृत्वरकान्तिराजि-
सङ्केतकेलिसदनं वसनं वसानम् ।
तं केवलं करुणया समुदीतमग्रे
पङ्केरुहाक्षमनघो गुरुरालुलोके ॥ १७ ॥

ग ॥ तस्यामेव स्वप्नदशायां स च भगवान् निज-
त्रैलोकनजनितविस्मयानन्दभारमपारं वोढुमपटुतयेव प्रणि-
तनकैतवेन भूमौ परिपतन्तं तं हृदयालवालाङ्कुरितभक्तिम-
ल्लिकामतल्लिकाप्रसूतवचनप्रसूननिचयैरर्चामारचयन्तं, अन्तः

किमेतदागमनकारणमिति चिन्तयन्तमनन्तसूरिं प्रति तत्कीर्ति-कुमुदवनविकासविधित्सयेव मन्दहसितचन्द्रिकां दशासु दिशासु विकिरन् करुणामिव स्यन्दमानां कामपि मृद्वीका-मधुरिममुचं वाचं साध्यावगमनाय व्याप्तिमिव हेतुः प्रथया-म्बभूव ॥

वेदोपलाल्ये वृषशैलशृङ्गे
कृपामहिम्ना कृतसन्निधानम् ।
जगत्त्रयीरक्षणजागरूकं
जानीहि मां ब्रह्म रमासहायम् ॥ १८ ॥

निर्व्याघातविजृम्भिहैतुकसदःकल्पान्तपाथोधर-
व्रातोन्मुक्तकुतर्ककर्कशशिलासंघातपाताहतान् ।
उत्कीर्णैर्निजवाक्सुधारसभरैरुज्जीवयन्तं जनान्
पुत्रं पुण्यगुणोज्ज्वलाय भवते दातुं यते कौतुकात् ॥ १९ ॥

मासे भाद्रपदे भविष्यति मम प्रीत्यै महानुत्सवो
नानादिग्जनशोभमानशिखरे नारायणक्ष्माभृति ।
तत्रागच्छतु दत्तनेत्रकुतुके जायासहायो भवान्
रत्नं शुक्तिरिव प्रदास्यति सुतं प्रख्यातमस्मत्कृपा ॥ २० ॥

प्रदाय तस्मै तां वाचं प्रत्यूष इव शेमुषीम् ।
सीमां वृषगिरेर्गन्तुं श्रीमानन्तरधादसौ ॥ २१ ॥

अथ स्वप्नदशामेतामपेतामात्मनोऽनुजाम् ।
विचेतुमिव निद्राऽपि विहाय सुधियं ययौ ॥ २२ ॥

ग ॥ तत्क्षणादेव शयनादुत्थाय शमधनपरिष्कृतिरयमनितरजनसुलभमनुपमपुण्यपुञ्जलब्धमसञ्जातपूर्वं क्षणे क्षणे स्मृतिजलधिवीचिभिरुपनीयमानं स्वप्नोपलब्धवृषाचलेन्दुवचनामृतमसाक्षिकमनुभोक्तुमनुचितमिति विजानन्नर्धास्वादितमम्बुरुहकन्दं रथपद इव दयितायै प्रतिपादयामास । तदास्वादनसमयसमुल्ललितपुलकमुकुलभूषिततनुलतया तया सह स गुरुः मलयादिव चन्दनो मानसादिव हंसो महोदधेरिव मणीन्द्रः हृदयानन्दनो नन्दनो गुणोत्तरो मत्तः समुदेष्यतीति समाश्वासमयं पयः स्वान्तशुकायोदञ्चयन् कंचन कालमनैषीत् । तदनु,

प्रबोधमाम्नाय इव प्रजानां
प्रपञ्चयन्वाञ्छितमर्थजातम् ।
महोत्सवो भाद्रपदाभिधाने
मासे हरेरात्रिरभूद्वृषाद्रौ ॥ २३ ॥

अनादिवाणीवदलंघनीया-
माज्ञां हरेरन्तरसौ दधानः ।

प्रभासखो भानुरिव प्रतस्थे
महं दिदृक्षुर्महिलासहायः ॥ २४ ॥

अकारणादापतितानि पूर्वं
वृषाचलेन्दोर्वचनामृतानि ।
सामोदमास्वाद्य सतां पुरोगो
मार्गश्रमं मन्दतरं चकार ॥ २५ ॥

नाकोल्लंघनजागरूकशिखरव्रातस्थलीविष्फुर-
त्पाकारातिमणिप्रकाण्डविततिप्रादुर्भवत्कान्तिभिः ।
मध्ये व्योमपयोनिधि प्रचुरयन् शैवालपारम्परी-
मग्रे तस्य गुरोरदृश्यत मनस्तोषाय शेषाचलः ॥ २६ ॥

उदग्रशृङ्गनिर्गलद्वियत्तरङ्गिणीझरी-
घळंघळस्वनच्छलात्स्वकीयभाष्यपद्धतिम् ।
उदीरयन्तमन्तिकस्फुरद्बुधावलीमुदे
फणीन्द्रशैलमादरादगादगाधधीरसौ ॥ २७ ॥

ततो वृषाद्रेरधिरुह्य शृङ्ग
कृतोदयं तत्र ननाम तेजः ।
तमालनीलं तपनीयचेलं
रमाविलोलं रमणीयलीलम् ॥ २८ ॥

ग ॥ तत्र कलशजलधियशोवर्षसूचकसौदामिन्या करुणारसोर्मिलनिजकटाक्षकल्लोलितकांक्षितपुरुषार्थया प्रणमदमरीकबरीभरतिमिरपरिरम्भलम्भितपरभागचरणनखरतार-कोपेतया कयाऽपि देवतया सिन्धुमिव विद्रुमलतया सिन्धुरमिव सिन्दूरमुद्रया गिरिमिव गैरिकरेखया कासारमिव कमलिन्या समुल्लसितम्, अहरन्तपम्फुल्लमल्लिकामञ्जरी-मञ्जिमचोरेण हारेण, कैरवनिखरेण कलिन्दनन्दिनीप्रवाहमिव परिष्कृतम्, किंकुर्वाणगीर्वाणगणवितीर्णदिव्यसरिदर्णोज-निवहकनदभ्यर्णतया विनतजनाभ्यर्थितविलोचनसृष्टिसमुचित-द्रविणसन्दोहमिव संगृह्णानं, बलदमनलोकमिव वर्षित-नन्दनाह्लादं मुनिजनमतिमञ्जरीमिलिन्दं मुकुन्दमनुभूय, पचेलिममोचान्तरङ्गैर्वाचां तरङ्गैराद्दतहृदयमारचयितुमारेभे ॥

वृषाचलशिरोरत्नं वृजिनध्वान्तदारणम् ।
परिष्करोतु मे मेधां परिरब्धं सदा श्रिया ॥ २९ ॥

देवता काऽपि संसारदावतापनिवारिणी ।
आयताय सुखायान्तर्जायतां जलदद्युतिः ॥ ३० ॥

उत्पलच्छदसच्छायमुत्फुल्लाम्बुजलोचनम् ।
उज्ज्वलं ज्वलति ज्योतिरुदितं वृषभूधरे ॥ ३१ ॥

विश्वरक्षाधुरीणानां विधूतविबुधद्विषाम् ।
विभो त्वदवताराणां वैभवं केन वर्ण्यते ? ॥ ३२ ॥

आविर्भावेषु ते श्रीमन्नञ्जनाद्रिनिकेतन ।
मन्ये विशिष्य मान्यौ द्वौ सेतुगीताविधायिनौ ॥ ३३ ॥

करे कलितकोदण्डं करुणार्द्रविलोचनम् ।
रघुपुङ्गवरूपं त्वां रमते परिरभ्य धीः ॥ ३४ ॥

सावित्रान्वयसम्भवेन भवता मुक्तः शराशीविषः
संवर्तोदितसप्तसप्तिपटलीसब्रह्मचारी हठात् ।
आस्वाद्य क्षितिजापहारिहृदयक्रीडारतं मारुतं
तत्सन्तोषकथाभिधानकुतुकी मन्ये जगाहे महीम् ॥३५॥

मध्ये पङ्कजमाकलय्य चरणं किंचिन्निकुञ्च्यापरं
नृत्यन्काञ्चनकिङ्किणीघनकटिर्हाराञ्चितोरःस्थलः ।
हस्तेऽञ्चन्नवनीतमायतभुजो हासाभिरामाननो
हृद्यः कुञ्चितकुन्तलैर्हृदि मुदं पुष्णाति कृष्णाकृतिः ॥३६॥

यतचित्तनिषेव्यदिव्यशक्ते
यदुवंशो भवता कृतोदयेन ।
निहतार्जुनवैभवेन चित्रं
नियमेनार्जुनवैभवं व्यधायि ॥ ३७ ॥

श्रीवेङ्कटेशपरब्रह्मणे नमः



वेङ्कटाचलपतिः श्रीश्रीनिवासः

कमप्यनवधिं वन्दे करुणावरुणालयम् ।
वृषशैलतटस्थानां स्वयं व्यक्तिमुपागतम् ॥

(दयाशतकम्)

क्वचिच्छ्लाघाघोषान् क्वचन हयहेषाहलहलान्
क्वचिद्वीणालापान् क्वचन गजघण्टाघणघणान् ।
क्वचिद्वंशीनादान् क्वचन घनसेनाकलकलान्
जनः श्रावं श्रावं जयति तव कान्ताकरुणया ॥ ३८ ॥

दलितदुरितजाले दन्दशूकेन्द्रशैले
कबलितभवगन्धे कालिमा कश्चिदिन्धे ॥
कुवलयमदहारी कुञ्जरेन्द्रोपकारी
मुनिहृदयविहारी मुक्तसन्तोषकारी ॥ ३९ ॥

दीव्यत्कौस्तुभदीपदीधितिभृति व्यालम्बिमुक्तासरे
दीप्तिं वन्दनदामजां द्रढयति श्रीवैजयन्तीश्रिया ।
वक्षोधाम्नि विहारभाजि सुदृशि व्यापारयन् शेमुषीं
कामी कश्चिदनर्गलं विजयते काकोदरेन्द्राचले ॥४०॥

प्रत्यूषस्मयमानपङ्कजवनप्रत्यर्थिनेत्राञ्चलं
प्रत्याख्यातसुराभियातिसुदतीताटङ्कभूमाङ्कुरम् ।
तात्पर्यं निरपायसूक्तिवचसां तालीदलाभं कृपा-
पारीणं पत्रनोदरम्भरगिरेरग्रे दरीदृश्यते ॥ ४१ ॥

हेमाडम्बरपश्यतोहररुचिं वामालकां कामपि
प्रेमावेशवशेन वक्षसि वहन् वैमानिकेन्द्रार्चितः ।

क्षेमाणि स्वयमातनोतु भजतां कामाभिरामाकृति-
भूमा कोऽपि भुजङ्गभूधरशिरस्सीमातमालोपमः ॥ ४२ ॥

ध्यातं योगकलाविलासरसिकैः शीतं दयास्रोतसा
ख्यातं मौलिषु कृत्रिमेतरगिरां क्रीतं रमाविभ्रमैः ।
वेतंडेन्द्रविपद्विमोचनचणं वातंधयक्ष्माधरे
जातं धाम पराकरोतु जगतामातङ्कमङ्कूरितम् ॥ ४३ ॥

आतन्वन् वदनाम्बुजे स्मितसुधामापन्नसञ्जीवनी-
माश्लिष्यन्ननपायकान्तिलहरीरम्यां रमाविद्युतम् ।
व्याकुर्वन् विनतासुते सविनये सौहार्दमन्यादृशं
भोगी कोऽपि विशृंखलं विजयते भोगीन्द्रशैलाञ्चले ॥४४॥

वक्षोदेशमहिम्ना वात्स्यायनदृष्टमागमं कंचित् ।
व्याचक्षाणमनादे र्वाचः सीमानमाद्रिये तेजः ॥ ४५ ॥

सुरभिलकलम्बकल्पं सूर्यप्रत्यर्थिकौस्तुभाकल्पम् ।
कमपि युवानमपश्यं कलशपयोराशिकन्यकावश्यम् ॥ ४६ ॥

॥ ग ॥ इत्थमुदिताभिर्भव्याभिरुक्तिभिर्भगवन्त - मञ्जनगिरिनाथमनुरञ्जयन् स्वकीयसुकृतराशिरत्र शुक्तौ वर्ष-सलिलशीकर इव परिणतिमद्भुतामभ्येष्यतीति हर्षविकसित-वदनो भवनमनन्तगुरुरविन्दत । तदनु भुवनतमोनिवर्तन -

नितस्वकीर्तितिरस्कारकारिकुमाराकारेण विश्वम्भरघण्टा
श्वम्भरायामिदानीमुदेतुमुद्युक्तेति शोकातिरेकादिव पतति
श्चिमसिन्धौ पयोजबन्धौ गुरुरसौ निखिलमपि सायन्तनकर्म
रमिमीत । अथ घण्टां प्रदातुमनितराभिज्ञं निर्गमिष्यतो
रेरानुकूल्यचिकीर्षयेव प्रवृत्तायां चरमार्णवजलतरङ्गानुषङ्ग-
म्यदहिमकरपावकप्रसूतधूमस्तोमेनेव तमसा करम्बितायां
लेयकरकरदृढपरिरभ्यमाणदिग्वरवर्णिनीसमुद्गतस्वेदकण -
लकैरिव तारकैरभिरामायां त्रियामायामनन्तसूरिरनुभूय
गसुखमजहदनघगुणनिकायया जायया सह निद्रामुकुलित-
यनं शयनमयासीत् । तस्यामेव क्षणादायां तत्क्षणविघटित-
कटसरसीकुमुदवनपवमानमाणवकसमाश्लेषसमुन्मिषित -
खपरवशतया निद्राणेषु जनेषु प्रथमक्षणावच्छिन्नघटादि -
ल्ययोगक्षेमाकाङ्क्षयेव समन्तात्सन्त्यक्तगुणे गगने,

देशिकाय पुरा तस्मै दत्तां संविदमात्मना ।
स वृषाचलधौरेयः सफलां कर्तुमैहत ॥ ४७ ॥

॥ ग ॥ तत्समयसमुचितमुज्ज्वलद्ब्रह्मतेजोहुतवह -
मरेखयेव शिखया शोभमानमकृतकफणितिरमणीविहरण -
लोपमैरच्छमृणालतन्तुसच्छायैरुपवीतैरुल्लसितं, प्रज्ञामृतोद-
दूर्मिभिरिवोर्ध्वपुण्ड्रैरुद्भासित, मुत्पादितभक्तिसरिदुत्पला -

लीलया सरोजाक्षमालया समलङ्कृतं ब्राह्मं वपुर्हरिरयमुररीचकार ।

त्रयी शिखरहर्म्यभूविहरमाणविद्वन्मन-
श्चकोरपरिपोषणव्रतकृताभिलाषोदयाम् ।
विशुद्धरुचिवीचिकां विभुरथैष घण्टां निजां
पुरो गिरिरिवाददे कुमुदिनीसुहृन्मण्डलीम् ॥ ४८ ॥

उद्दिश्य तं देशिकमुद्गृहीता
नाथस्य घण्टा न परं चकम्पे ।
वेदान्तविद्याविपरीततत्त्व-
त्सिद्धान्तबद्धादरदुर्मदोऽपि ॥ ४९ ॥

श्रुतिप्रमोदं विदधातु भूमा-
विति प्रभुर्याभयमन्वमंस्त ।
सा रत्नघण्टा सपदि प्रणादै-
रदात्तदीयश्रुतिहर्षवर्षम् ॥ ५० ॥

बिभ्राणः करजलजेन तां निशीथे
पर्यन्तं भवनभुवः प्रपद्य सूरेः ।
आह्वानं हरिरयमग्रजन्मरूपो
गम्भीरध्वनिरकरोत्कृपैकवश्यः ॥ ५१ ॥

न्तगुरुरपि,

सरोजभूरिवाम्नायैः स्वैरस्य विबोधितः ।
सह वध्वा समुत्थाय सदनालिन्दमभ्यगात् ॥ ५२ ॥

पुरस्सूर्यमिवोदीतं पुरुषं ब्रह्मरूपिणम् ।
भक्त्या भवनमानीय बहुमेने बहुश्रुतः ॥ ५३ ॥

परस्य पुंसः पदयोर्म्रदिम्ना
निरस्तपङ्केरुहयोरतानीत् ।
सरस्वतीसारविदां जनानां
पुरःसरोऽसौ विनतीरनेकाः ॥ ५४ ॥

॥ ग ॥ प्रणम्य समुत्थिताय हर्षाङ्कुरशङ्कावहान्
ककमुकुलानधिगच्छते, 'कोऽसि किमर्थमिदमगारमुपागच्छ'
ते परिपृच्छते तस्मै चरमयुगवावदूकाकुललोकावनपरो
काकुमुदसुहृदाकारवदनः काकोदरगिरिपतिरमृतसेकोपमा-
मामुक्तिगङ्गामुत्तरङ्गयामास ॥

अध्यापिताखिलाम्नायमञ्जनक्ष्माधरस्थितम् ।
अवेहि ब्रह्म मुख्यं मामञ्चितं सर्वकर्मभिः ॥ ५५ ॥

॥ ग ॥ प्रज्ञाधनमूर्धन्य, ' प्रावृषेण्यवासरेणेव
गवता फणधरशिखरिशिरोमणिना पयोवाह इवाहं प्रेरितो

वारिधारामिव मौक्तिकघण्टामिमां केदार इव भवति वितीर्य सस्यमिव सन्तानसन्तोषमङ्कुरयितुमुत्पन्नतात्पर्यः पर्यगच्छम् ।

मुक्तावदातरुचिपूरपवित्रिताशा
घण्टाऽधुनाऽत्र भवतः कलितावतारा ।
सर्वज्ञ निर्जरधुनीव वसुन्धरायां
सञ्जीवयिष्यति हतान्कलुषानलेन ॥ ५६ ॥

समधिगम्य जनिं भवतो घना-
द्भुवि वचोमधुवर्षविधायिनी ।
तटिदिवेयमपास्यतु जिह्मगान्
तनुभृतां तनुतां मतिकेतकीम् ॥ ५७ ॥

घनगुण भवान्पत्न्यै घण्टां प्रयच्छतु साऽपि ता-
मधिगतवती सौम्यां सन्ध्यां दिशेव बलद्विषः ।
कमपि निगमप्रायं पुत्रं प्रसूय कुतूहला-
दनघमतिभिर्दत्तानङ्गीकरिष्यति चाञ्जलीन् ॥ ५८ ॥

॥ ग ॥ इति कथितं वचः कौतुकेन शृण्वद्भि-
स्तैस्तैर्व्यापारैर्विस्मयं वितृण्वते तस्मै विनयशुकपञ्जराय विबुध-
जनकुञ्जराय,

परिचरणविधाने पद्मजेन प्रयुक्तां
पटुतररवधाटीधूतदैतेयवर्गाम् ।
वृषशिखरिविलासी वेदविद्वेषिशासी
हततिमिरमुदीतां हन्त घण्टां ददौ ताम् ॥५९॥

॥ ग ॥ प्रदाय च हरिरधिगतमनोरथमिव अपगतचिन्तासन्तापमिव आरचितकार्यमिवात्मानं मन्यमानः, "स्वस्ति भवते साधुचरितवशीकृतलोकाय सवधूकाये" ति वचसा तदीयहृदयसन्तापमावर्जयन्निर्जगाम ॥

आज्ञासरं शिरसि विश्वपतेर्वितन्वन्
प्राज्ञाग्रगो मृगदृशे विततार घण्टाम् ।
चक्षुष्यमौक्तिकचयेन चमत्कृताङ्गां
चान्द्रीं कलामिव दिवे दिवसव्यपायः ॥ ६० ॥

मुक्ताघण्टामधिभुवा दत्तामेत्य जहर्ष सा ।
करिणा कौतुकोन्मुक्तां करिणीव मृणालिकाम् ॥ ६१ ॥

मञ्जुलकान्तिरमुष्या
मौक्तिकघण्टा कराब्जमारूढा ।
अजनयदम्बुधिकन्या-
हस्तालङ्कारपुण्डरीकधियम् ॥ ६२ ॥

कण्ठे कामपि हारकान्तिलहरीं कर्पूरचूर्णश्रियं
वक्षोजे ललितां ललाटसविधे रम्यां ललन्तीरुचम् ।
कर्णे कल्पकमञ्जरीविलसितं कान्तिं कचे माल्लिकीं
घण्टामौक्तिकदीधितिर्विसृमरा कान्ताङ्के व्याकरोत् ॥६३॥

तदात्वे हस्ताब्जद्युतिविततिरस्याः प्रसृमरा
तदन्तस्सङ्कीर्णा त्रिशदमणिघण्टारुचिझरी ।
कटाक्षाणां धारा कुवलयदृशस्तत्र मिलिता
त्रिवेणीसंयोगं त्रयमिदमतानीदभिनवम् ॥ ६४ ॥

॥ ग ॥ ततः परमनन्तगुरुसहधर्मचारिणी तनय-
रूपेण तरसाऽवतरिष्यन्तीं तदनुगुणोपलालनविधिना बहु-
मन्वानेव प्रथमतः करपयोरुहाभ्यां परिगृहीतां तामङ्कतटी-
मन्तःशुभशतोत्कलिकाकमनीयामनीनयत् ॥

अङ्के मुक्तामयीं घण्टामाकलय्य वधूरभात् ।
धुनीव सितपाथोजवनीविलसितान्तरा ॥ ६५ ॥

॥ ग ॥ सा घण्टा प्रतिकलमविनाभूतावपि निमे-
षोन्मेषौ विसृज्य मदीयमौक्तिकच्छायापयोरसास्वादमादधान-
योर्देव्या नयनयोरग्रतो वर्तनमयुक्तमिति मत्वेव सत्वर-
मन्तर्धाय तदुत्तरक्षणादद्भुतशक्तिशालिनो तद्गर्भमभ्यगच्छत् ।

एवमहिगिरिपतिमहिम्ना विहितानभूतपूर्वान् व्यापाराननु-
चिन्त्यानुचिन्त्य मोदमानयोरनयोर्दम्पत्योरद्भुतरसझरी निर्व्या-
घातमुदिता नाव्या बभूव ॥

तनयानुपलम्भेन तयोर्मनसि जृम्भिता ।
चिन्तेव तरसा पश्चाद्विरराम विभावरी ॥ ६६ ॥

॥ ग ॥ तदनन्तरमुपान्तकान्तारतरुकोटरान्तरुद्गत-
शकुन्तमुखान्तनितान्तोद्वान्तनिनदनिवहतरङ्गनिर्घोषसन्तति-
दन्तुरितान्तरिक्षोदन्वदन्तरे समुन्मीलदहिमकिरणकरपरि-
रम्भपम्फुल्यमानाम्भोजवनीविनिर्गततदीयरजोनिवहमोहन-
चूर्णनिकरविकरणविधायिवातायनान्तरायातसमीरकिशोर-
चोरापह्रियमाणशम्बरदमनसङ्क्रान्ततान्तकान्ताजनाङ्गकन्द-
लितस्वेदबिन्दुमुक्ताफलसन्दोहे सागर इव तत इतः समुच्च-
लिततरणिकान्ते, क्रीडामयूर इव दूरोन्मुक्तचन्द्रके विपुल-
तरविरहव्यथाविधूननाभिलाषकलितदृढपरिरम्भसम्पदनुभव-
मुदितरथाङ्गयुगलनयनविगलदानन्दजलतुन्दिलकासारतरङ्ग-
जाले समुन्मिषति काले, सर्वे परिजनाः परिचरणाभिलाषा-
दम्बुजवनीं लोलम्बा इव, भगवदभ्यर्णमुपमासेदुः ॥

हरेः पुरस्तादनवेक्ष्य घण्टा-
मानन्दनाडिन्धमकान्तिमक्ष्णोः ।

चिन्तामहोदन्वति तैर्निपेते
चान्द्रीमदृष्ट्वेव रुचिं चकोरैः ॥ ६७ ॥

ततस्ततो विचलितैस्तद्वृत्तान्तविवक्षुभिः ।
स गिरिः संवृतो रेजे तरलोर्मिरिवार्णवः ॥ ६८ ॥

॥ ग ॥ क्रमेण हृदयकदलीवनं तरलीकुर्वति तत इतो वलमाने तत्प्रसङ्गपवमाने किमेतदिति विस्मयं विवृण्वानास्त्वरितमशेषाः शेषाचलनिवासिनो जना भगवतः पङ्केरुहवासिनीनिवासिनो मन्दिरं बृन्दशः परिवव्रुः ॥

समेयुषो जनस्यास्य संशयोऽजनि चेतसः ।
तरसा तस्य शैलस्य शिखरादिव निर्झरः ॥ ६९ ॥

॥ ग ॥ क इदानीमर्चकादिमेषु कमनीयवर्णां घण्टामिमां कैटभ इव त्रयीमचूचुरत् ? कदा पुनरस्माकमञ्जलिसहस्रैराराधितो भगवानञ्जनाचलेन्दुरगणितमदृश्यतामापन्नामेनां भगीरथप्रसादितो जह्नुरिव जाह्नवीं दृष्टिपथमधिगमयिष्यतीति चिन्तादन्तुरान्तःकरणेषु तेषु, वृषाचलाधीश्वरदिव्यैश्वर्यपरिपालनकलाप्रवीणो यतिधुरीणः कश्चन सत्वरमागत्य मध्येसभमिदमभाणीत् । "भो भो घण्टानवलोकनजनितविशयविस्ताराः सर्वे सभास्ताराः, श्रूयतामद्भुत-

मिदं सावधानेन, (मनसा) यस्य स्मरणमात्रेण पूरितमिव सुधायां मग्नमिव मधुरसेषु चर्चितमिव चन्दनैः कीर्यमाणमिव कर्पूरैः वेष्टितमिव पल्लवैः वीजितमिव कदलीदलैः मिलितमिव मृणालैः निरुपमानं शीतलिमानं अञ्चति मे चेतः ॥

आवासभूरस्ति किलाद्भुतानां
काञ्चीति काचिन्नगरी यदन्तः ।
आद्येन पुंसा करुणातिरेका-
दाविर्बभूवे विधिवाजिमेधे ॥ ७० ॥

तत्राजनि वचोधाटीवित्रासितवदावदः ।
अनन्तगुणपाथोधिरनन्तगुरुकुञ्जरः ॥ ७१ ॥

सुताभिलाषी सुधियां वरोऽय-
मग्रस्थलीमस्य गिरेरयासीत् ।
निक्षिप्य लक्ष्मीकमितुर्निदेशं
निर्व्याजमन्तस्तमिवाम्बुराशिः ॥ ७२ ॥

तस्मिन्कलशपाथोधिकन्याविटदयानटी ।
अभूतपूर्वं नटनमहेतुकमिदं व्यधात् ॥ ७३ ॥

वेदान्मोदयितुं मुनीन्मनुमुखानुद्दामविद्योद्दयान्
कर्तुं हर्तुमदभ्रदुर्मतिघटादर्पान्धकारानपि ।

वृत्तं कार्तयुगं प्रवर्तयितुमुत्कण्ठामकुण्ठां वहन्
तस्मै वारिजवासिनीसुहृदसौ दत्ते स्म घण्टामिमाम् ॥७४॥

स्वप्ने ममेदमखिलं हरिणोपदिष्टं
सोऽयं गुरुर्वसति चात्र यशोविशालः ।
इत्युक्तिपुष्परससन्ततिभिः पुपोष
यत्युत्तमः सपदि सभ्यमनोमिलिन्दम् ॥ ७५ ॥

॥ ग ॥ ते च तद्वचनसुधास्वादजनितखर्वेतरविस्मयाः सर्वे दर्वीकरनिवासिनस्तस्यानन्तसूरेरवलोकनाय तदीयं गेहान्तमगाहन्त । तदात्वे,

विद्वत्पुरोगो विरचय्य काल्ये
कर्माणि नित्यानि स कौतुकेन ।
विजृम्भितं विश्वसृजो दयायाः
व्याकर्तुमुत्को वनितामवादीत् ॥ ७६ ॥

॥ ग ॥ अयि भव्यहृदये, भक्तजनसुभगम्भावुको भगवानेव भवदीयवदनाम्बुरुहवद्धावितद्विजराजरूपो भवनमस्मदीयमवगाह्य मुक्ताघण्टां मन्त्र इव सिद्धिं, मह्यमाकांक्षिततनयामोदाय प्रादात् । अन्यथा परेषां मानुषाणामसुलभं कथं तादृशं तेजः । मनसि च मे महीयसीं मुदमजीजन-

दखिलातिशायिशक्तिशालिनी सा घण्टा । या पुनस्तव करकिसलये स्तबकलीलामवलम्ब्य ततः परमुत्सङ्गसङ्गिनी तादृशीमदृश्यविद्यामारचितसान्निध्यान्मध्यादिवाध्यैष्ट ॥

एवं वदन्तं गुरुपुङ्गवं तं
समीक्ष्य कान्ता चलदीक्षणान्ता ।
वचांसि माध्वीमधुराणि साध्वी
समाददे सा धृतमन्दहासा ॥ ७७ ॥

॥ ग ॥ विचित्रसुकृतनिधे ! किमत्र शङ्कया ? पुरैव खलु पुत्रसम्पत्प्रतिपादनप्रतिज्ञा दुर्विज्ञानमहिमवता भगवता प्रादर्शि । श्रूयन्ते किल तस्य यथोक्तकारितामभिदधानानि परःशतमैतिहासिकानि वचनानि, "अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन", "द्यौः पतेत् पृथिवी शीर्येत" इत्यादीनि । अपि च, हर्षपरवशतया तत्क्षणेनाभिहितं रहस्यमिदमिदानीमावेद्यमानमवधार्यतां नाथेन । प्रस्थानसमये पुरातनं रूपमुपसंहृत्य पुमानसौ,

वक्षोदेशे किमपि वनितारत्नमाकल्प्य दीव्यन्
व्याकुर्वाणो मरकतरुचां मञ्जिमानं निजाङ्गैः ।
व्यकोचाब्जप्रतिमनयनो व्यञ्जयन् शङ्खचक्रे
व्याख्याति स्म क्षणमभिनवं विस्मयं नेत्रयोर्मे ॥ ७८ ॥

॥ ग ॥ इत्थमुदिताभिरितरेतरोक्तिभिर्यतिधुरंधुरवचनं तदवितथयन्तौ दम्पती समीक्षमाणानां वृषक्ष्माधरवासिनामाह्लादवशादालापा बहुविधाः प्रादुर्बभूवुः। "भगवति चिरन्तनफणिते! यौवनमधिगताऽसि, जननि स्मृतिवितते! जननं पुनः प्रपन्नाऽसि, शमधनहृदयङ्गमे शारीरकपद्धते! दुर्मृतिमुत्तीर्णाऽसि, निष्किञ्चनरक्षिणि निक्षेपविद्ये! निखिलजनमनःसौधमधिरूढाऽसि, सहृदयसहचरि संयमीन्द्रसरस्वति! स्थिरतरमङ्गलसूत्राऽसि, दोषावलोकनव्यसनिन्यसूये! दत्तजलाञ्जलिरसि, अभ्यर्हिततिरस्कारपातकिन्नाग्रह! निष्परिग्रहोऽसि, खलसात्कृतलील कले! गलितकोलाहलोऽसि, विश्वविलोचन विवेकसूर्य! सन्निहितोदयोऽसि, मेधाविपर्ययविधायिन् मोह! महाग्रहनिग्रहयन्त्रयन्त्रितोऽसि, धर्मोदरम्भरे दम्भ! निर्निदानदम्भोलिपतननिहतोऽसि, विष्वगकुण्ठवृत्ते काम! कण्ठगतजीवितोऽसि, विश्वाकर्षणव्रतिन् राग! विगतजृम्भणरागोऽसि, संसरणसरणिपरिश्रान्तपानीय सत्त्वगुण! समुन्मिषितसत्त्वोऽसि, धन्ये धरणि! परिणतसुकृताऽसि, येन फणिगिरिपरिबृढघण्टा तत्करुणातरङ्गिणीविहरमाणयोर्दम्पत्योरनयोस्तनयतया धर्मपरित्राणपराऽवतरिष्यतीति। संघटते किल सर्वेश्वरपरिकरभूतायास्तस्यास्तार्क्ष्यादीनामिव हिताय जगतामवतारः।

एवंविधोक्तिमुखरानभिनन्द्य लोकान्
अन्तःप्रहर्षलहरीं द्विगुणां दधानः ।
आशावधूपरिषदामनपायहारान्
प्रादादनन्तगुरुरेष यशोमिषेण ॥ ७९ ॥

ततो नु वातंधयशैलधाम्ने
वितीर्य भूम्ने विनतीर्विनीतः ।
कान्तासहायः कृतिकुञ्जरोऽसौ
काञ्चीपुरीं कौतुकवानवाप ॥ ८० ॥

अनन्तसूरेरबला बुधानां
हर्षाय गर्भं बिभराम्बभूव ।
कवेरिवोक्तिः कमनीयमर्थं
कलाकलापं विधुमण्डलीव ॥ ८१ ॥

इति

## वेदान्ताचार्यविजये चम्पूप्रबन्धे द्वितीयः स्तबकः



कल्पद्रुः कविवादिसिंहविदुषः प्रज्ञासुधावारिधेः
जातः कश्चन कल्पितार्थविततिश्चम्पूप्रबन्धात्मना ।
वर्षन् वेदवतंसदेशिककथामाध्वीं द्वितीयो महा-
नस्यासौ स्तबकः करोतु सुमनःकर्णावतंसश्रियम् ॥



अथ

# वेदान्ताचार्यविजये चम्पूप्रबन्धे

## तृतीयः स्तबकः

अथ दौहृदलक्ष्म यद्वपुष्युदभूदुत्पललोचनामणेः ।
तदकृत्रिमसूक्तिमप्यहो धृतसत्त्वां जगतामसूचयत् ॥ १ ॥

तदा विरेजे तरलेक्षणायास्तारानिभा काऽपि तनोरभिख्या ।
गर्भस्थमुक्तामयशौरिघण्टागभस्तिधारा बहिरुद्गतेव ॥ २ ॥

प्रभापदेशाद्बहिरायताक्ष्याः प्रसृत्वरो बालकसत्त्वराशिः ।
कुचाद्रिदुर्गें कुरुते स्म रुद्धं क्रुधा तमश्चूचुकनैल्यरूपम् ॥

अनघसूक्तिमिषादमरापगां शिशुरसौ जनयिष्यति मत्सखीम् ।
इति कलिन्दसुता किमुपाययौ रुचिरहृज्जणिरोमलतात्मना ॥

अचिरादखिलार्थवर्षकं कमलाकान्तदयार्णवोदितम् ।
सुमनोमणिमेत्य मध्यभूः सुतनोर्हन्त कृशत्वमत्यजत् ॥ ५ ॥

अपाकरिष्यन् गगने परोक्तामदृश्यतामर्भक एष बाधात् ।
मातुः पुरा मध्यमनाम्नि तस्मिन्प्रत्यक्षभावं प्रथयाम्बभूव ॥ ६ ॥

अवलोकितुमद्भुतं क्षमात्रिभवादर्भकमात्मनोऽधिकम् ।
वसुधा किमु मृत्कणात्मना वनितागर्भपुटीमटीकत ॥ ७ ॥

सर्वत्र साम्यं वहतः प्रशस्ता मध्यस्थतेति प्रतिपद्य बालः ।
वैषम्ययुक्तस्य वलित्रयस्य मध्यस्थतां मातुरसौ न सेहे ॥ ८ ॥

उदरस्थशिशोरुदारमेधालतिकानामतिवेलजृम्भणानाम् ।
उदितस्सुदतीमणेर्महीयानभिलाषस्तबकः समुद्दिदीपे ॥ ९ ॥

सैषा समुज्जृम्भितगर्भभारा भूषाविशेषानलसाऽपि धर्तुम् ।
मुक्ताकलापं हृदये महान्तं धर्तुं सकाङ्क्षाऽजनि तत्त्वपूर्वम् ॥१०॥

पदे पदे पद्ममुखी सखीनामालम्बमाना करपल्लवानि ।
आशासु सञ्चारकृते श्रुतीनां हस्तावलम्बं वितरीतुमैच्छत् ॥

पुष्पाण्युपादातुमपारयन्ती सखीभिरग्रे समुपाहृतानि ।
हरिल्लताभ्यो बत हैतुकानां यशःप्रसूनान्यपनेतुमैच्छत् ॥

कथाविशेषान् कथितान्सखीभिः कान्ता न कर्णे
कलयाम्बभूव ।
अनादिवाचां जयमादधानाः कथा बुधानां मुहुराचकाङ्क्षे ॥

दरीमिवान्तर्हितसिंहशावां खनीमिव प्रोज्ज्वलरत्नगर्भाम् ।
उदीक्ष्य कान्तामुपपन्नसत्त्वामाधत्त सन्तोषमनन्तसूरिः ॥१४

शर्मणे तस्य बालस्य कर्म पुंसवनादिकम् ।
निर्ममे निरपायोक्तिमर्मवेदी स देशिकः ॥ १५ ॥

तदनु,

अधिगतवति कन्याराशिमह्नामधीशे
विभववति मुहूर्ते विष्णुतारानुषक्ते ।
अकृतकवचनाब्धेरद्भुतोल्लासहेतुं
तनयमजनयत्सा चन्द्रमैन्द्री दिशेव ॥ १६ ॥

तदात्वे किल, चारुकीर्तिपटवासचर्चया
कल्पयिष्यति ममैष कौतुकम् ।
इत्यवेत्य हरितां ततिर्जवा-
दद्भुतं प्रसदनं किमाददे ॥ १७ ॥

अध्वरानयमभेद्ययुक्तिभिः
स्थापयिष्यति भुवः स्थले पुनः ।
इत्युदित्वरमुदा प्रदक्षिणं
नृत्यति स्म नितरां हुताशनः ॥ १८ ॥

स्वातिशायिरयशालिनं वचः-
पूरमस्य जनयिष्यतः पुरः ।
संक्षिपन्निव निजं जवं ह्रिया
सञ्चचाल पवनस्ससौरभः ॥ १९ ॥

मैत्रीमस्य विधास्यतस्सुमनसां बृन्देषु मन्देतरां
कीर्तिं कर्तुमुदित्वरा सुमनसां सङ्घैर्मुदा प्रेरिता ।

अह्नाय क्षितिमानशे सुमनसां पारम्परीं बिभ्रती
 हर्षाश्रुप्रकराननर्गळगळन्माध्वीकधारामिषात् ॥ २० ॥

॥ ग ॥ स भगवान् त्रयीतनुरपि त्रयीतनुताप-नोदनशीलं बालमेतमुदीतमुद्वीक्ष्य परितोषातिरेकेण परिरब्धु-काम इव प्रसारितकरसहस्रः परं रुरुचे ॥

द्रमिडकलया लोपामुद्राकुटुम्बिनमद्भुतैः
 अपि च नियमैरद्धा जेता निरंकुशधीरसौ ।
इति किल धियं कृत्वा तस्यावतारमहोत्सवे
 विपुलकुतुकाद्वीचीभेरीमघोषयदम्बुधिः ॥ २१ ॥

विधातुं शाखानां विततिभरितां सौख्यलहरी-
 मुदीतेऽस्मिन्नुर्व्यामखिलजगदानन्दनगुणे ।
द्रुमाणां शाखाभिर्द्रुतममितकौतूहलवशा-
 ददभ्रं प्राकाशि प्रसवफललक्ष्मीरभिनवा ॥ २२ ॥

तदवतारमहोत्सवदर्शिनां
 तनुभृतामजनिष्ट कुतूहलम् ।
उदयदिन्दुमयूखविसर्पण-
 स्फुरितसिन्धुतरङ्गविडम्बकम् ॥ २३ ॥

॥ ग ॥ अनन्तरमनन्तगुरुश्चिरन्तनपुण्यसञ्चयो-दञ्चितं चिरकालकाङ्क्षितमात्मजोदयोत्सवमाकर्ण्य प्रथममाक-

लितसन्तोषसरिदन्तरावगाहनोऽपि पुनरनन्तसरसि रचित-निमज्जनः सपदि सर्वतस्समागतैस्सरसीरुहवासिनीसहचर-चरणरुचिमधुभरितमतिमञ्जरीलाभहृष्टैः शिष्टैस्सह जातकर्म-निर्माणकुतूहली तनुजमभ्यर्णसीमानमानयामास ॥

दळदम्बुजदर्शनीयनेत्रं
मुखलक्ष्मीजितमुग्धचन्द्रबिम्बम् ।
क्षणमैक्षत निर्निमेषदृष्टिः
तरुणार्कोपमविग्रहं तनूजम् ॥ २४ ॥

ववर्ष हर्षं पितुरन्तरङ्गे
बालो जपालोहितकोमलाङ्गः ।
मरुत्किशोरो मधुमासजन्मा
मध्ये वनस्येव मरन्दपूरम् ॥ २५ ॥

रुचां परिवृढो यथा रुचिकदम्बमम्भोरुहे
कुहूमुखयुवा यथा मधुरकूजितं माधवे ।
वितीर्य धनसञ्चयं विबुधवर्यसंघे तथा
ततान गुरुकुञ्जरस्तनुजजातकर्मोत्सवम् ॥ २६ ॥

परिगृह्य सुवर्णगोकुलं परितोषेण घनेन साधवः ।
इदमेव विजृम्भतां शिशोरिति सर्वेऽपि वितेनुराशिषम् ॥

अरिष्टदीपः परमस्य सूनोः
आभातरङ्गैर्न तदाऽभ्यभावि ।
प्रत्यर्थितत्तत्कथकावळीनां
प्रबोधदीपोऽपि दिगन्तरेषु ॥ २८ ॥

॥ ग ॥ तदनु दिने शुभगुणे दिव्ये मुहूर्ते दीर्घदर्शी स देशिको भगवतो वेङ्कटनाथस्य कांक्षितफलकल्पलतया अनुकम्पया शम्पया कैतकमिव शरदा हंसमिव सरिता अरविन्दमिव अधुना संदर्शितं तनयं तदीयेन पुण्येन नाम्ना, कलशजलधिरिव कैटभारातिं कौस्तुभेन, प्रभातसमय इव पयोजकाननं परिमळेन, मधुरिव महीरुहं मञ्जरीपुञ्जेन, भूषितमकार्षीत् ॥

पयःपरिचयं चक्रे पुत्रः पुण्यनिधेर्गुरोः ।
विज्ञाय तस्य मर्माणि विजेतुमिव सूक्तिभिः ॥२९॥

आस्वादनेषु पयसां ततिरात्तघोषं
सुस्राव सृक्वयुगलेन शिशोरमुष्य ।
मेधासुधाजलनिधेर्हृदि जृम्भमाणा-
दुद्गत्वरी सरयमूर्मिपरंपरेव ॥ ३० ॥

पयसां पानकालेषु वक्त्रे शंखमसौ वहन् ।
विरेजे वावदूकानां कीर्तिं कबळयन्निव ॥ ३१ ॥

मणिडोलागतं बालं माता गीतैरतोषयत् ।
मिळिन्दशावं मधुरैर्मरन्दैरिव मञ्जरी ॥ २१ ॥

उल्ललास रदनद्वयी शिशो-
रुज्ज्वलद्युतिनिधौ मुखाम्बुजे ।
संस्कृतद्रमिडसूक्तिवल्लिका-
तल्लजांकुरयुगीव तादृशी ॥ २२ ॥

ललन्तिका तस्य ललाटदेशे
संदानिता संभृतमौक्तिकश्रीः ।
सरस्वती सादरमापतन्ती
वक्त्राम्बुजे वस्तुमिव व्यलासीत् ॥ २४ ॥

सद्माङ्गणे संभृतसन्निवेशो
सनातनोक्तिस्सहसोदतिष्ठत् ।
आलम्ब्य मातुः करमुत्थितेऽस्मिन्
आशासु सञ्चारमसौ व्यतानीत् ॥ २५ ॥

कुदृक्षु तादृक्षमतिः कुमारो
निजं पदं निष्प्रतिघं निधास्यन् ।
तद्वाचकप्राथमिकांशवाच्ये
पादार्पणं पर्यचिनोत्पुरस्तात् ॥ २६ ॥

प्रबन्धा वादिनां लीनाः पदमेकं विवक्षति ।
वाक्यं वदति बालेऽस्मिन् वागमीषां च मुद्रिता ॥३७॥

॥ ग ॥ अस्मिन्नपरिमितसत्त्वगुणाधारे कुमारे विहारेण किमपि रजो ग्रहीतुमितस्ततः प्रचलिते भयातिरेकादन्येन रजसा हन्त निलिल्ये ॥

क्रमेण चतुरवचनसुधारसपुषा विविधलिपिविशेषविदुषा नवनवरुचिशालिवपुषा निखिलजनमानसमुषा नानात्मगुणजुषा तेनात्मजनुषा समुचितसमयरचितचौलोत्सवशोभिना अनन्तगुरुरात्मनो वंशममरभुवनमिव वदान्यतरुणा कलशार्णवमिव कमलाविलासिना काव्यमिव ध्वनिना धन्यममन्यत ॥

अथ कदाचिदात्रेयकुलारामकोकिलो वादिहंसवारिदो नाम कोविदो विविधविद्याविलासिनीविहाररसिकस्य वरददेशिकस्य सदनमनिदमादिफणितिशिखरमुखकलाकलापपरिशीलनाभिलाषेण जिगमिषुरात्मभवनादचरमगिरिकुहरादब्जिनीपतिरिव प्रतस्थे ॥

अनन्तगुरुनन्दनः सविधसीम्नि तं मातुलं
प्रयान्तमनणीयसीं प्रणयवैखरीमात्मनि ।

वहन्तमतिवेलधीर्विनयतो विनम्यान्वगात्
सरोजवनसम्भवं मधुकरो यथा मारुतम् ॥ ३८ ॥

आस्थानमनपायोक्तेरापणं स्मृतिसम्पदाम् ।
अगारं वरदार्यस्य जगाहाते जवेन तौ ॥ ३९ ॥ तत्र,

वादप्रोद्धतवावदूकनिकराहङ्कारकूलङ्कषान्
वाचा व्याकृतकृत्रिमेतरवचश्चूडाकलागह्वरान् ।
निस्साधारणजृम्भमाणधिषणानिर्धूतवाचस्पतीन्
विद्यावारिधिनायिकान् ददृशतुर्धीरानुदारानमू ॥४०॥

शमितविमतवृन्दं शारदामूलकन्दं
शुभगुणरमणीयं शुद्धधीमाननीयम् ।
वृजिनतरणसेतुं वेदसिद्धान्तकेतुं
वरदगुरुमुपेतौ वन्दनाकाङ्क्षया तौ ॥ ४१ ॥

विननाम तं कथकहंसवारिदो
विनयादनन्तगुरुसूनुना समम् ।
कुतुकोदयेन कुशिकात्मजं यथा
सहलक्ष्मणो धरणिकन्यकासखः ॥ ४२ ॥

॥ ग ॥ अथ विलोचनगोचरो विनय इव विनत-
निकरसकलोऽपि सरस्वतीलतावष्टम्भदण्डशङ्काशौण्डैर्मनीषि-

जनहृदयमदकलभालानभूतैः हस्ताम्बुजोदस्तैः पुस्तकै-र्विस्तारितश्रीः, तस्य गुरोरुपान्ते पंक्तिशो निषण्णः पटीरतरु-निवह इव परिसरे मलयगिरेरलासीत् ॥ वरदगुरुरपि,

उररीकृतेक्षुरसरीतिभिर्गिरां
लहरीभिरेष मुखरीभवन्मुखः ।
त्रिपरीतविद्वदधरीकृतिक्षमो
विवरीतुमारभत कांक्षिताः कलाः ॥ ४२ ॥

॥ ग ॥ तेन मनीषिजनमनोरथविषयीभवदशेष-कलाविशेषवितरणसुरतरुणा गुरुणा करुणावशंवदेन सकृ-दुपन्यस्तं समर्थहृदयदुर्ग्रहमर्थजातमवधानभरितमेधाविहार-देशो वेङ्कटेशोऽयं अब्धिना वितीर्णममृतममरगण इव संगृह्य, सर्वातिशायिनमात्मनोऽनुभावं दिदर्शयिषुः, तत्र विचित्रतमान् अनितरविचक्षणक्षोभ्यानाक्षेपान्, अनुपमसंवि-धानानि समाधानानि च किमेतदाश्चर्यमिति निष्कम्पं निर्निमेषमीक्षमाणेषु त्रिविधेषु विबुधेषु बहुधाश्रुतषड्दर्शनी-मर्मतयेत्र निर्मितवान् ॥

विद्वत्कुञ्जरचित्तवारिजवनप्रोल्लासबालातपं
हृद्यं वेङ्कटनाथसूक्तिनिकरं सिद्धान्तमर्मस्पृशम् ।

आकर्ण्याद्भुतनिर्झरीमनुपमां बिभ्रद्भुजाभ्याममुं
संश्लिष्याऽशिषमाततान स गुरुर्वात्सल्यपाथोनिधिः ॥

अपौरुषेयैर्वचसां कलापैः
अदर्शि पुंसां असकृद्यदायुः ।
तदस्य देवो विदधातु विद्व-
त्तपोविपाकादवतारभाजः ॥ ४५ ॥

क्रूरक्रूरकुदृष्टिसङ्घकुहनावाणीकृपाणीहति-
व्यालोलानिदमादिसूक्तिपरिषन्निर्वेदसर्वङ्कषः ।
सोऽयं लक्ष्मणयोगिपुङ्गवमतप्रासादमासेदुषां
पुण्यानां विदुषां प्रसादविषयो भूयादमेयात्मधीः ॥ ४६ ॥

मन्थानाचलमथ्यमानकलशाकूपारगर्भस्थली-
निर्बाधोद्भवदद्भुतोर्मिपटलीधिक्कारधाटीभटैः ।
वाक्यैरिक्षुरसैक्यशालिभिरसौ वाचाटकौतस्कुत-
व्रातटोपविपाटनं विरचयन् दत्तां जगत्कौतुकम् ॥४७॥

॥ ग ॥ इत्थमभिमतां आशीर्वचनवीचिकां विर-
चितवता वरदगुरुणा प्रेरितो वादिसितगरुदम्बुधरो वेङ्कटेशेन सह सदनं निजं विजगाहे । क्रमेण विचित्रमतिः आत्रेय-
रामानुजः काले समुचिते कलितोपनयनं नयनोपहारमिव अनन्तगुरोः समाहारमिव सर्वधियां सविग्रहमिव अवनि-

भागधेयं आत्मनो भागिनेयं अन्यादृशपरिणाहशालिना प्रेम्णा वितीर्णैः आम्नायप्रमुखैः अखिलकलाकदम्बैः, अम्बरमणिरिव मणिमात्मनः तेजोभरैः, अम्बुधरसमय इव परिसरं सरितः कदम्बसौरभैरभूषयत् ॥ वेङ्कटेशोऽपि,

अह्नाय वेदानखिलानाचार्यादग्रहीदसौ ।
पुनरुच्चारणाकाङ्क्षी पदानां वेष्टने परम् ॥ ४८ ॥

अभूदादौ वेदप्रकरमधुरक्षीरमुदितः
ततो यातायातं फणिफणितिवीथीषु विदधे ।
व्यधत्तासौ पश्चात्कणचरणविद्यापरिचयं
वितेनेऽथ प्रौढो यतिनृपतिवाणीपरिणयम् ॥ ४९ ॥

कारुण्योचितमारुतव्यतिकराद्वेगोत्तरं गत्वरीं
गुर्वीमेष गुरूपदेशतरणिं हर्षोदयादाश्रितः ।
विद्यावारिनिधीन् विगाह्य परितः पाण्डित्यमुक्ताफलं
लेभे लक्ष्मणयोगिपुङ्गववचोधारावधूभूषणम् ॥ ५० ॥

॥ ग ॥ तदानीं किल वेङ्कटेशदेशिकः पाराशर्य इति निगमपारगैः, प्राचेतस इति प्रगल्भसाहित्यविद्याविलासिभिः, पाणिनिरिति व्याकरणपारीणैः, गौतम इति न्यायमतकौतुकिभिः, जैमिनिरिति प्रथममीमांसापथजाङ्घिकैः,

बोधायन इति शारीरकभावबोधकैः, मनुरिति स्मृतिसा-रकृतमानसैः, कलशीसुत इति द्रमिडकविताभिमानिभिः अमानि ॥

विंशत्यब्दे विदितविततशेषविद्याविलासो
वंशे वृत्ते वयसि परमामौचितीमुद्वहन्तीम् ।
कन्यां कान्त्या कनकलतिकां पर्यणैषीन्मुदाऽसौ
कौसल्यायास्सुत इव धराकन्यकां धन्यचेताः ॥५१॥

सा वधूरपि,

यथा स्वाहादेवी हुतवहमुदारद्युतिभरं
यथा लोपामुद्रा कलशसुतमाश्चर्यचरितम् ।
यथा पाथोजाक्षं भुवनजननी पुष्कलगुणं
तथा कान्तं विद्याजलधिममुमभ्येत्य रुरुचे ॥ ५२ ॥

अन्यादृशगुणाधारमन्योन्यातिशयावहम् ।
अपरित्यक्तसौहार्दमरोचत तयोर्युगम् ॥ ५३ ॥

आनीतैरनपायसूक्तिविपिनादभ्यर्हितां वासनां
आतन्वद्भिरुदग्रकर्मकलिकासङ्घैरसंख्यैरसौ ।
पद्माकान्तमपूपुजत्प्रतिदिनं भक्तिं परामुद्वहन्
वध्वा साकमरुन्धतीसुलभया वृत्त्या समिन्धानया ॥

कान्तासमेतः कमलेक्षणस्य
कैङ्कर्यलक्ष्मीमितरैर्दुरापाम् ।
अञ्चन् समं वा गुरुरुन्नतं वा
कश्चिन्न लेभे कलिताहितं वा ॥ ५५ ॥

॥ ग ॥ एवं गच्छति काले वेलाविलंघिनिजधिषणानिरपायवर्तिकाप्रवर्तित, मनवधिकविद्याविवेकालोक - वितरणधुरीणं हयवदनमन्त्रदीपमहितकथकमदतिमिरभर - निराकरणमाकलयितुमिच्छन्, विच्छेदोदयदूरया स्नेहधारया स हृद्यतरमतिरदिद्युतत् ॥

नैर्मल्यं निजपाथसीव जगतश्चित्तेऽपि तत्तादृशं
कुर्वाणे कलयन्फणीन्द्रसरसि स्नानादिकं प्रत्यहम् ।
प्रज्ञाबोधनमागधं कलिकथाप्रस्थानमौहूर्तिकं
वाजिग्रीवमनुं जजाप स धियं व्यापारयंस्तत्पदे ॥ ५६ ॥

घनगुणजलधेर्गुरोरुपात्तै-
रनघवचोभररोचिरुद्भिरद्भिः ।
हयमुखमनुवर्णरत्नजालै-
रलमकरोदयमात्मनो मनीषाम् ॥ ५७ ॥

विश्वासाम्बुनिधेरमुष्य विदुषः प्रत्यूहदूरैर्जपैः
स्तोत्रैः श्रोत्रसुखैरपि प्रतिकलं प्रोज्जृम्भितानन्दथुः ।

चक्षुर्गोचरतामुपेत्य वदने वाजी स देवो ददौ
चञ्चद्राङ्गतरङ्गतल्लजघटाचातुर्यधुर्यं वचः ॥ ५८ ॥

नाथस्स वाचां नयनाध्वनीनो
गुरोर्वचोगुम्भमिषेण गङ्गाम् ।
प्रवर्तयन् पर्वतराजसाम्यं
प्रभागुणाभ्यां प्रथयांबभूव ॥ ५९ ॥

अद्भुतां शक्तिमासाद्य हयाननकृपावशात् ।
आरेभे हैतुकान् जेतुमनन्तगुरुनन्दनः ॥ ६० ॥

तदीयचित्तवारिधौ विचित्रसत्त्ववीचिके
समुत्पतन्सनातनार्वपर्वशर्वरीपतिः ।
अदभ्रयुक्तिचन्द्रिकामभङ्गुरां विजृम्भयन्
पराचकार कौतुकात्कुदृष्टिगर्वशार्वरम् ॥ ६१ ॥

वाचा लवित्रेण मुहुर्विलूनैः
वाचाटकौतस्कुतगर्वघासैः ।
हृष्टं स चक्रे हृदि मन्दुराया-
माद्यं हयं भक्तिगुणेन बद्धम् ॥ ६२ ॥

अध्वा माध्वैर्न जज्ञे कुमतिमतवचःप्रक्रिया न्यक्कृताऽसीत्
लज्जासिन्धौ न्यमज्जि द्रुहिणहरमुखैर्गौतमो जातमोहः ।

लिल्ये शाक्योक्तिशैल्या गुरुमतपथिकैः क्वापि भीतैर्निपेते
वादामोदादपारान् विकिरति वचसामङ्कुरान्वेङ्कटेशे ॥ ६३ ॥

अनवीनवचश्चूडावनवीथिषु तस्य गौः ।
चरन्ती दुर्वचोघासं चरन्ती सर्वशो बभौ ॥ ६४ ॥

॥ ग ॥ तदानीमकृतकफणितिपथाध्वन्यमूर्धन्योऽयं न्यायसिद्धाञ्जन, न्यायपरिशुद्धि, तत्त्वटीका, न्यासदशक, शरणागतिमाला, शरणागतिदीपिका, सुदर्शनाष्टका, थं-पञ्चक, संग्रहगाथा, षोडशायुधस्तुति, परमार्थस्तुति, हस्तिगिरिमाहात्म्यादिमान्, वादिमानपराकृतिकृतसन्धान् प्रबन्धान् प्रकृष्टयोगिन इव परब्रह्मस्मृतिसहायान् मलयपवनानिव कलितमाधवोत्कर्षानकार्षीत् ।

धरासुकृतभूरुहस्तबकभावमासेदिवान्
अनन्तगुरुसन्ततेर्विरचयन् वतंसश्रियम् ।
असौ गुरुजनाग्रणीरनिदमादिवाणीशिखा-
मरन्दलहरीमदाद्बुधमधुव्रतानां मुदे ॥ ६५ ॥

॥ ग ॥ एवंविधैरस्य वैदुष्यविभवैर्गुरोरुत्पादितमच्छमुक्ताकलापसच्छायं स्फटिकमुकुरबिम्बमिव वहुमतीविलासिन्याः कुटजगर्भमिव कूटस्थगिरां कुमुदवनमिव गगन-

कासारस्य विशदातपत्रमिव वैदिकसाम्राज्यलक्ष्म्याः कतकमिव कलिकलुषितजनसम्बोधसलिलस्य समधिकं यशः समशोभत ॥

दीप्तं दिक्पर्णजालैः कनकधरणिभृत्कर्णिकाश्लेषकान्तं
विद्यानालप्ररूढं विपुलजलनिधिव्रातमाध्वीकधारम् ।
व्यातन्वानं विपश्चिन्मणिनिकरधियां व्यक्तमुत्तंसलक्ष्मीं
दीव्यद्व्योमद्विरेफं जगति विरुरुचे तद्यशःपुण्डरीकम् ॥६६॥

॥ ग ॥ तथाविधेन यशसा विस्मापितहृदयाः कदाचन काञ्चीनगरवासिनः संख्यावदग्रेसराः सङ्घीभूय सर्वे विविधवादाहवजयशालिनो वेङ्कटेशस्य पारितोषिकमेकं प्रदित्सवः तत्सदनमभिप्रतस्थिरे । प्रस्थिताश्च ते नानादिगन्तरेभ्यः कलाभ्यासकौतुकादागतैः कैश्चिदाकलितपवनोदरम्भरपरिबृढवचोगुम्भविचारारम्भैः, अन्यैरन्योन्यविजिगीषाविहितवेदोत्तमाङ्गयुगसमुत्तरङ्गप्रसङ्गैः, अपरैरम्बुरुहलोचनपुरन्ध्रिकाविभुतोपायताप्रभृतिविशदीकरणपराशयपराशरपराङ्कुशयामुनादिचिरन्तनगुरुसरस्वतीसमुच्चारणसमुच्चाटितप्रतिभटाटोपैः, इतरैरष्टाक्षरपदाक्षरपरिस्फुरदार्थिकशाब्ददशोत्तरशतसंख्यासंख्यातपरदेवतास्वरूपप्रकारानुसन्धाननिर्भरसविर्मवदानन्दसन्धुक्षितरोमाञ्चसमञ्चितगात्रैः, करणमदकलभनिय-

मनतोत्रैः कलिमोहग्रहनिग्रहवेत्रैश्छात्रैरनवरतमासेव्यमानं सन्ततसन्तन्यमानसमाराधनमुदितहृदयतया प्रतिकलमुदि - तस्य कण्ठादुपरि वाजिनो भगवतः कमलाविलासिनः कान्तिपूरैः ताराशरदुदितधाराधरकलशवाराकरकुमुदसीरा- युधशशभृदैरावतजलजनारायणशयनहारामरभुवनसारादिम - रुचिनिचयदोराहवविधायिभिः सर्वतो धवलिततया रुचिर- मौक्तिकचूर्णरचितरङ्गवल्लीकमिवाधस्ता, दाबद्धदुकूलवितान- मिवोपरि सङ्केतसदनमिव सकलकलाविलासिनीनां, समु- द्भवपदमिव सदाचाराणां, प्रथमोदाहरणमिव परमव्योम - वैभवाना, मदृष्टपूर्वमसमशरस्य, अश्रुतपूर्वं रागद्वेषयो, रना - घ्रातपूर्वमसूयायाः, पौर्णमास्यधिकरणमिव विद्वद्वाक्यसमु - दायप्रसिद्धिविधूतवादान्तरं वेङ्कटनाथगुरोर्मन्दिरमविन्दन्त । तत्र सदने तरलमिव मणिहारलतां शशिनमिव तारापंक्ति - मन्तेवासिसन्ततिमन्तरवस्थानादलङ्कुर्वाण, मतितेजस्वितया सन्तमसमान्तरमपि जनानामपनेतुमवतीर्णं अवनीमम्भोज- बन्धुमिव समिन्धानम्, वदनरङ्गभुवि नटनमारचयितुमा- दरादवतरन्त्या सरस्वत्या वेगातिरेकेण विस्रस्तां मुक्तावलि- मनुकुर्वतीं मृत्स्नया ज्योत्स्नारुचा रचितामूर्ध्वपुण्ड्ररेखां ललाट- सीम्नि ललिताममाबिभ्राणं, आननचन्द्रानुरूपाभिरभिताप - हारिणीभिरपाङ्गचन्द्रिकाभिरानतजनमतिकुमुदिनीमुल्लासयन्तं

वक्त्रवारिजविहारिवचोऽधिदेवीवतंसकलिकाविगलितमक - रन्दधारामिव पाटलामधरकान्तिमुत्किरन्तं, जिह्वाग्रसिंहा - सनाधिरूढसनातनतुरगलालाजलबिन्दुपटलीमिव दशना - वलीं दधतं, ब्रह्मलक्ष्मीविहारोचितवक्षोमण्डपरङ्गवल्लिकारूपै- रुपवीतक[illegible]रुद्भासितं, हृदयसौधाधिरोहणपरहरिभक्तिमत्त- काशिनी[illegible]णिकातुल्येन तुलसीमणिनलिनाक्षदाम्ना देदीप्य- मानं, सु[illegible]ाकरकलासोदरीभवदुत्तरीयकमनीयतया निज- प्रवाहातिशायिवचोझरीनिर्माणालङ्कर्मीणोऽयमिति विस्मया- दुपगतया गङ्गयेव कलितपरिष्वङ्गं, विनतजनविलोचनशुक- द्वन्द्वविहरणानुगुणविटपाभ्यामिव भुजाभ्यामुद्भासितं, व्या- ख्यानकेलि[illegible]व्यालोलतया परमतयुक्तिविततेरपनयनमिव कल- यता करेण किमपि किसलयसुलभं तेजःपुञ्जं व्यञ्जयन्तं, मुकुन्ददिदृक्षाभरितसमाश्रितविचक्षणचक्षुस्समुचितदिव्याञ्जन- रेखया इव रोमरेखया राजमानं, विनतविबुधमेधावधूक्रीडानु- रूपगभीरनाभीसरस्तटवास्तव्यहंससंशयमावहन्तमन्तरीय - माकलयन्तं, विद्याविघाततिमिरभरनिरासचन्द्रायमाणनखर- निकुरुम्बं, प्रणतजममनःपुण्डरीकबालातपायितपदद्युतिप्रपञ्चं, विग्रहविशेषमिव हयग्रीवस्य, चूडारत्नमिव लक्ष्मणमतलक्ष्म्याः,

सुपर्णमिव सुकीर्तिपरिरब्धं, हरिमिव मित्रमण्डलशरणमुत्कृष्ट-गोवर्धनञ्च, जनकमिव शोभमानगुणशतानन्दवशंवदं, पंक्ति-रथमिव परिगृहीतविजयार्थसाधकसुमन्त्रसिद्धार्थं, महानाग-मिव मनसाप्यगणितक्षुद्रनरेन्द्रानुसरणक्लेशं द्वादशोपसद-मिवाहीनश्रुतिचिन्तानीताहर्गणं वेङ्कटेशगुरुं विपश्चितो विष्फुरितविस्मयातिरेका विलोकयाम्बभूवुः ॥

अथ विनीतिवशाद् द्रुतमुत्थितं
कृतनतिं तमनन्तगुरोस्सुतम् ।
समभिवीक्ष्य गणस्स सुमेधसां
सबहुमानमिमां गिरमाददे ॥ ६७ ॥

भवानेको दातुं प्रमदलहरीं प्राज्ञसदसां
परेषां च क्षेप्तुं प्रभवति वचो दुग्धजलधे ।
रवेरन्यः को वा रथपदकुलानाभिमतं
विदध्याद् घूकानां विलसितविघातं च जगति ॥ ६८ ॥

प्रकामाहंकुर्वत्प्रतिभटजनाटोपकपटं
मथित्वा पाथोधिं पटुवचनमन्थानगिरिणा ।
यशस्ताराकान्तं यतिपतिवचः कैरवञनी-
परित्राणप्रौढं भजसि ललितस्त्वं गुणगणैः ॥ ६९ ॥

॥ ग ॥ "अहो निगमशिखरकासारसारसाय-मानमानस ! अनन्तसूरिसन्ततिजलधिसन्तानशाखिन् ! अनवधिककल्याणगुणगणनिधेरसम्भवदवद्यस्य तव साम्य-सम्पदं जगति कोऽपि नोपैति । तथा हि, विचित्रगोसहस्र-भूषितोऽपि सविता सत्पथात्प्रच्युतिं कदाचन प्रतिपद्यते, विशुद्धोऽपि विभावरीविलासी विप्रयुक्तवृत्तिविरोधमाचरति, घनोऽपि जलदश्चपलानुषङ्गमङ्गीकरोति करोति च परमहंस-पराभवं, विष्णुपदासक्तोऽपि तारकानिकरस्तामसेषु समयेषु रुचिमधिकामाधत्ते, क्षमाभृदपि गिरिर्हरिनिग्रहविषयो भग्न-क्रमश्च भवति, कोमलात्मापि कुसुमनिवहो मधुपैर्मलीमसै-रासेव्यते, व्याकरणपटुरपि वाताशनपतिर्जिह्मगभावमावि-ष्कुरुते, शुचिरपि ज्वलनो भुवनेन परिभूयते, सुमनसां वरोऽपि पुरन्दरः पूर्वविबुधविद्वेषमुद्वेलयति, पुण्यजनेश्वरोऽपि धनदो भवानुरागं भजति, अमृतवितरणपटुरपि पयोनिधिः पदे पदे भ्रमं समुद्वहति, सुदर्शनासक्तोऽपि कृष्णः कामो-दयसामोदः, सर्वमङ्गलाञ्चितोऽपि वृषभध्वजो दोषाकरशेखरः सरस्वतीकान्तोऽपि सरोजसम्भवो नाभिजातः, द्विजराजोऽपि गरुडः चक्रिणि वैरमारभते कुरुते च रुद्रानुभूतौ कुतूहलं" इति निगद्य विद्वदग्रेसराः सर्वे पुरतो महत्तरभक्तिवशादपरि-त्यक्ताञ्जलये तस्मै विनयसनाथाय वेङ्कटनाथाय हर्षपूर्व-

मसमैः सुवर्णैरारचितं किमपि कवितार्किकसिंहाभिख्यारूप-
माभरणं वितीर्य चरितार्थचेतसः स्वं स्वमगारमगमन् ॥

मदाम्बुधारया यथा मदावलो मरुत्वतो
वदान्यपादपो यथा वरेण्यपुष्पसम्पदा ।
फणामणिव्रजश्रिया फणी स भाष्यकृद्यथा
तथा व्यभादभिख्यया तया गुरुर्धियां निधिः ॥७०॥

इति

# वेदान्ताचार्यविजये चम्पूप्रबन्धे
# तृतीयः स्तबकः



कल्पद्रुः कविवादिसिंहविदुषः प्रज्ञासुधावारिधेः
जातः कश्चन कल्पितार्थविततिश्चम्पूप्रबन्धात्मना ।
वर्षन् वेदवतंसदेशिककथामाध्वीं तृतीयो महा-
नस्यासौ स्तबकः करोतु सुमनःकर्णावतंसश्रियम् ॥



अथ

# वेदान्ताचार्यविजये चम्पूप्रबन्धे
# चतुर्थः स्तबकः

---

॥ ग ॥ अथ कदाचिदभिनवकिसलयरुचिभर-कुङ्कुमरजोलेपकमनीयवनीवधूसन्निधानलाभसंहृष्टपरपुष्टयुव-तन्तन्यमानमधुरतरगीतमुखरितहरिदन्तरः, विश्वविजय-धुरन्धरविषमशरवसुन्धराधिपप्रतापाङ्कुरशङ्काकरपङ्केरुहधूली-विकिरणकेळीकन्दलदभिलाषचन्दनवनपवमानबालपरिरम्भ-लम्भितामोदविततिः, उद्यानमण्टपाधिरूढविटपिवरविधीय-मानव्रततीसुदतीविवाहसाक्षीभूतपल्लवहुतवहलाजाहुतिसन्देह-वदान्यलतान्तकुसुमसन्ततिसनाथः, मान्त्रिको मानवती-मानग्रहस्य, मौहूर्तिको मधुकरझङ्कारनिगमारम्भस्य, सौख-शायनिकः किंशुकमुकुलानाम्, वैहासिकः सहकारकोर-काणाम्, सूचयितुमिव सुरभितां सर्वतः, कामः संघट्टन-माकलयन्, मानयितुमिव माधवतां कमलानुकूल्यमुल्लासयन् अतिवेलसन्तापसागरं कुहर निपातिताध्वन्यकान्ताजनस्वान्तो वसन्तः, स्वमित्र सरसवचःप्रसूनैरखिलागमपरिष्कारमाविष्कु-

र्णं कविकथकपञ्चाननगुरुमासेवितुमञ्चितादर इव प्रादुरभूत् ॥

प्रकृष्टैर्विद्वद्भिः कविकथकपञ्चाननपदे
परेषां दुष्प्रापे प्रकटनमिषिक्तस्य सुधियः ।
वसन्तश्रीरग्रे विहितगतिरारात्रिकविधिं
सरःपात्रे कृत्वा सरसिरुहदीपानकुरुत ॥ १ ॥

प्रत्यादिश्य पुरातनच्छदघटानेपथ्यशाठीं मधुः
प्रोत्कीर्य प्रसवाञ्जलीन्किसलयश्रेणीकरोदञ्चितान् ।
माद्यत्कोकिलगानभेदललितं मध्येवनं नर्तनं
चक्रे कर्तुमदभ्रकौतुकभरं चित्तेशयस्य प्रभोः ॥ २ ॥

काङ्क्षां काञ्चनसंचयेषु विजहत्कङ्केलिधूलीमिषात्
काषायाम्बरमुद्वहन् विरचयन्कान्तारवासव्रतम् ।
मन्त्रं कञ्चन चञ्चरीकनिवहो झङ्काररूपं जपन्
वृत्तिं योगिकुलाञ्चितामकलयद् भक्त्या भजन्माधवम् ॥३॥

उत्तरां हरितमस्मदभीष्टा-
मुष्णदीधितिरसौ स्पृशतीति ।
वक्तुकाम इव दण्डधराग्रे
वायुरस्य दिशमाश्रयति स्म ॥ ४ ॥

उन्मेषभाजामपि कोरकाणा-

मुद्गृह्य माध्वीकधनं वनेषु ।

मन्ये चलन्तं मरुतं वसन्तो

भृङ्गावळीशृंखलया बबन्ध ॥ ५ ॥

॥ ग ॥ सुरभौ तत्र सुमनसामपचयमारचयितु-मुद्यानमुपागता गतानुकृतमरालनिकराः करानमितमञ्जरी-निपतित मकरन्दकण द्विगुणीकृत कुचतट कुरविन्द मणिसराः सरागोदयदयिताकलितविविधकलिकावतंसविराजिताः जिता-रविन्दवदनपरिमललहरीपरितोषितषट्चरणाः चरणाहताशोक-दर्शितपुष्पावलीनिष्पादितसंमदाः मदाधिककुहूमुखरवपुन-रुक्तसंलापसमुल्लसिताः सिताभ्रानुलेपशङ्काकरप्रत्यङ्गविकीर्ण-परागराजयो जयोद्यतमदनपताका इव परितो वनिताजना विजहुः ॥

मधुना मधुराणि पल्लवानां

निकुरम्बाणि नितान्तमर्पितानि ।

परिभुज्य पिकद्विजाः प्रणादैः

मुहुराशीर्वचनं मुदा वितेनुः ॥ ६ ॥

वेलालङ्घिकुहूमुखप्रणयिनोलीलानिनादोर्मिले

केलीकाननकैतवे जलनिधौराजत्प्रवालव्रजे ।

पालाशस्तबकैरदर्शि परितो लोलम्बजालाञ्चितै-
र्चिस्संहतिरौर्वपावकभवा संक्रान्तधूमाङ्कुरा ॥ ७ ॥

शाखास्तम्भाग्रजाग्रन्नवकिसलमणीदीपदेदीप्यमानां
शश्वन्निष्यन्दिमाध्वीरसकणपटलीपातशीतान्तरालाम् ।
विष्वग्व्याकीर्णरम्यस्तबकभवरजोरङ्गवल्लीं वसन्तो
हृद्यामुद्यानशालां हृदयभवविभोर्निर्ममे नर्महेतोः ॥ ८ ॥

वसन्तसमये तस्मिन्वारणाद्रिविहारिणः ।
उदभूदिन्दिराजानेरुत्सवो लोकविश्रुतः ॥ ९ ॥

॥ ग ॥ जातुचिदुत्सवे जगतीधरः पूर्व इव शर्वरी-
विटं मुक्ताकिरीटमुद्वहन्, उपकण्ठगतकुन्तलभरघनगलित-
हरिकोपानुकारिकुण्डलकुरुविन्दघृणिमालाबालातपपरिष्वङ्ग -
परिस्फुरदाननपयोरुहः निरवग्रहनिर्गत्वरविग्रहरुचिधुनीफेन-
निकराकारेण हारेण चारुणा चकासितः, वक्षस्थलीविलस-
मानकौस्तुभधाम व्यामोहसन्दायि हरिचन्दनानुलेप रञ्जिततया
कुञ्जरमपि गैरिकरजःपिञ्जरं सागरमपि विद्रुमलतावितान-
भासुरमनुकुर्वन्, आनमतां जनानामघविततिरजनीमपनेतुं,
मभिलषितसम्पदम्भोनिधिमुज्जृम्भयितुमपि, सूर्याचन्द्रमसौ
सुदर्शनपाञ्चजन्यकैतवेन कराभ्यामुद्भासयन्, वक्षोविहारि-
लक्ष्मीकरतलकनदर्णोजकुहरविकीर्णकिञ्जल्कबृन्दसन्देहचिन्ता

मणिना चेलेन, सन्तान इव किसलयेन, समुल्लसितः प्रसूनसमय इव प्रस्फुटतिलकः, वारिधिरिव व्यक्तोर्मिकः, वलाहक इव व्यञ्जितकङ्कणः, गिरिरिव गैरिकाञ्चितपादकटको भगवान्मदावलमहीधरमौलिशिखरो वरदः सायन्तनघनसवर्णं सुपर्णं, मेघ इव मेरुशिखरं, क्रीडामयूर इव मणिसौधमारुह्य काञ्चीनगरवीचिकासु गतागतानि, लीलया कलयितुमालयादात्मनः प्रातिष्ठत। तदात्वे,

पतङ्गरूपे पतगाधिराजे
नीलो बभौ नीरधिजाविलासी।
विकासभूम्ना रुचिरे पलाशे
विहारमञ्चन्निव चञ्चरीकः॥ १० ॥

मुखरुचिजलधौ मुराभियाते-
र्नयनमधत्त नवीनपद्मरीतिम्।
मृगमदतिलकेन तत्र जज्ञे
निरुपमनीलसरोजसाहचर्यम्॥ ११ ॥

कुरुविन्दमणीगणान्वहन्नरविन्दस्य रुचामसासहीन्।
हरिरन्वकरोरुदित्वरैरुडुजालैरुपगूढमम्बरम्॥ १२ ॥

निजतनुद्युतिसूर्यसुतातटी-
युगविजृम्भिशरस्तबकोपमाम्।

हरिरुपेत्य स चामरयोर्युगी-
मतितरां जनरञ्जनमादधे ॥ १३ ॥

बिम्बौ दर्पणरोहिणीरमणयोर्वध्वा विरोधं मिथः
साम्याधिक्यपरीक्षणाय सदृशः सौन्दर्यभूम्ना स्वयोः ।
विस्रम्भात्कमलाविलासिवदनाम्भोजस्य पार्श्वद्वयी-
मायातौ विशदापत्रयुगळीव्याजेन मन्यामहे ॥ १४ ॥

कल्पान्तप्रथमानवारिदघटाप्रौढारवाडम्बर-
प्रत्याख्यानधुरन्धरैरविरतैः प्रस्थानभेरीरवैः ।
जामातुः कमलासखस्य जलधिर्विज्ञाय यात्रोत्सवं
द्रष्टुं प्राप्त इव व्यरोचत जनस्तोमः प्रणामोत्सुकः ॥१५॥

उत्कर्षं मम संविधातुमुदितः पद्मासहायोत्सवः
सख्यै सम्प्रति कथ्यतामनुपमः पुर्यै बलद्वेषिणः ।
इत्थं निर्भरकौतुकोदयजुषा काञ्च्या पुरा प्रेरितं
मन्ये द्योतलमारुरोह जनतापादोदितं भूरजः ॥ १६ ॥

सेवाहेवाकिदेवाधिपतिसविनयोदस्तहस्ताग्रमुक्तैः
प्रत्यग्रैः पारिजातप्रसवसमुदयैरग्रतो विश्वनेतुः ।
निर्व्याघातं निपेते जलधरपदवीलंघिलोलत्पताका-
कोटीव्याघट्टनेन च्युतिमिव गमितैस्तारकाणां समाजैः ॥१७॥

विहारयात्राजुषि विश्वबन्धौ
वादित्रशब्दो दिवमध्यरुक्षत् ।
निजाश्रये सञ्चरतां सुराणां
निर्बाधसेवावसरं विवक्षुः ॥ १८ ॥

उदञ्चयन्हर्षभरं श्रुतीना-
मुत्सार्य दूरे जलराशिघोषम् ।
विश्वं पुनानो विभुवाद्यशब्दो
वेदान्तविद्यागुरुमन्वकार्षीत् ॥ १९ ॥

मुरद्विषो मुग्धमृगाङ्ककल्पा मुक्तातपत्रावलिरुल्ललास ।
उल्लोललोकव्रजवारिराशेरुद्गत्वरी फेनपरम्परेव ॥ २० ॥

दिग्वधूरत्नताटङ्कैर्द्योतलारण्यपल्लवैः ।
छत्रैरुद्यद्दिनाधीशमित्रैरन्यैरभूयत ॥ २१ ॥

विशेषतो भूषितमात्मकान्तं
विभुं प्रकर्षेण विलोकयन्त्याः ।
रागप्ररोहा रुचिरप्रदीप-
व्याजाद् व्यजृम्भन्त वसुन्धरायाः ॥२२॥

विस्फुरत्कनकचेलवेष्टिता वीथिषु स्थलरथाः पदे पदे ।
बालचण्डकरमण्डलोल्लसत्पूर्वपर्वतरुचं व्यवृण्वत ॥ २३ ॥

अग्रे हरेरञ्चितघोषमुच्चैरेके समुच्चिक्षिपुरम्बराणि ।
मरुद्गणानां महवीक्षणार्थमाह्वानमारादिव कल्पयन्तः ॥२४॥

उत्कम्पशाटी ललिता मुरारेरुच्चैः पताकावलिरुल्लसन्ती ।
सेवापराणां दिवि देवतानां संमर्दजस्वेदमपाचकार ॥२५॥

उद्यदिन्दुकरबृन्दलोहिता मन्दमारुतमुहुर्विधूनिताः ।
व्योमनि ध्वजपटा विरेजिरे सायमम्बुधररुञ्छया इव ॥२६॥

विचित्रपुष्पैरवकीर्यमाणां वीथीं रमानेतरि गाहमाने।
वीक्षाकृते तस्य विलासिनीनामनेकधा चेष्टितमाविरासीत् ॥

ललना मषीललितमेकलोचनं
विरचय्य शौरिमुपसेदुषी जवात् ।
अदसीयकान्तिलहरीविलेपना-
दपरं च काचन दधौ तथाविधम् ॥ २८ ॥

अनुलेपनाय मृगनाभिमञ्जसा
परिकल्प्य काऽपि करपल्लवे ययौ ।
विभुदेहकान्तिविततेरदस्त्विषा-
मपि तारतम्यमवलोकितुं किल ॥ २९ ॥

सततं विधूततमसा समेयुषा
सुमनोगणं रुचिरवासनाजुषा ।

कबरीभरेण शफरीदृशो जवा-
दधिगत्य मुक्तिमधिकद्युतिर्दधे ॥ ३० ॥

करपङ्कजं कलितहंसकं जवा-
दपि सुन्दरी मिळितमंघ्रिपल्लवम् ।
वितताान काचन विशाललोचना
तदभूदयुक्तमपि युक्तिमेदुरम् ॥ ३१ ॥

अनुरागसिन्धुरवलोकनाद्विधोः
मम कण्ठदघ्न इति मानिनी परा ।
किमसूचयद्गलगतेन पाणिना
गतिलोलहारमणिपातशङ्कया ॥ ३२ ॥

नवकुङ्कुमेन नतमध्यमा परा
न ततान रञ्जनमुरोजयोर्युगे ।
तरसा ततोऽप्यरुणिमानमाददे
तरळीभवन्मणिरुचा तदावृतम् ॥ ३३ ॥

महिळामणेरधरितश्रुतिर्वहन्
मधुपेन योगमवतंसपल्लवः ।
पतितो बभूव, लभते तथाविधः
परदेवतापरिसरे कुतो गतिम् ॥ ३४ ॥

मुकुन्दवीक्षात्वरया ललाटे
मुक्तालन्तीं न परा बबन्ध ।
परिष्क्रियाऽजायत तत्र तादृक्
पारम्परी स्वेदपयःकणानाम् ॥ ३५ ॥

काञ्चीगुणप्रदममुं वरदं भजन्त्याः
काञ्चीगुणस्य विरहेण न काऽपि हानिः ।
इत्थं विचिन्त्य हृदि किं रशनाकलापं
सख्या वितीर्णमपि संजगृहे न काचित् ॥३६॥

कचसंहतिनाम्नि सैंहिकेये
मुखचन्द्रस्पृशि मुग्धलोचनायाः ।
परितः कुरुते स्म रत्नदानं
कुचभूभृद्गतिवेगशीर्णहारः ॥ ३७ ॥

वेलाविलंघिगतिवेगवशाद्विकीर्णां
कान्ता करेण कचसंहतिमाबबन्ध ।
तत्र च्युतस्रजि तथाविधपुष्पशोभां
तस्या नखावलिरुचः कलयाम्बभूवुः ॥३८॥

प्रतिपदचलितं बभौ परस्याः
श्रुतिगतमुत्पलमुन्मरन्दधारम् ।

सविधमुपगते हरौ सवर्णे
नटदिव निर्गतसंमदाश्रुबिन्दु ॥ ३९ ॥

गतिरयगलिते स्वनीविबन्धे
कलितकराम्बुरुहा परा विरेजे ।
व्रजयुवतिदुकूलहारिणोऽस्मा-
न्निजवसनं परिपातुमुद्यतेव ॥ ४० ॥

इति द्रुतपदक्रमोच्चलितचारुहारावली
मरीचिनिभनिर्झरीकनदुरोजपृथ्वीधरः ।
मुखाम्बुरुहवासनाविततिलाभलोभभ्रम-
न्मधुव्रतपरम्परामतिविधायिकीर्णालकः ॥ ४१ ॥

विलोलमणिनूपुरध्वनिसुधातरङ्गावली-
विशृंखलविबोधितप्रसवबाणवीर्याङ्कुरः ।
निरर्गलकुतूहलान्निखिलपौरकान्ताजनो
व्यलोकत रमासखं विविधसौधवातायनैः ॥४२॥

॥ ग ॥ इत्थं अम्भोरुहाक्षमुद्वीक्षमाणानां पौर-चकोराक्षीणां कटाक्षैः सेन्दिन्दिरा इव, सेन्दीवरवन्दन-मालिका इव, तथाविधमुकुन्दसौन्दर्यसन्दर्शनसानन्दचेतसां तासां श्लाघावचनसमयसमुल्लसितैः दशनकिरणकलापैः सचन्द्रातपा इव, सशारदवारिदा इवादृश्यन्त दश दिशः ।

ाटीरपङ्कारचिताङ्गरागाः कर्पूरवीटीकनदाननाब्जाः ।
स्तूरिकागन्धिकपोलमूला मल्लीसरावेष्टितमौळिभागाः ॥४३॥

संमर्दवेलासु विलासिनीनां
सर्वाङ्गसंस्पर्शसुखं भजन्तः ।
कटाक्षधाटीविवृतानुरागा
विटाग्रगण्या व्यवलन्त केचित् ॥ ४४ ॥

विजृम्भितस्वेदविधूनिताग्रं
विशेषकं कोऽपि युवा नखाग्रैः ।
तन्वन्यथापूर्वमिव व्यतानीत्
तन्व्या मुखाघ्राणसुखानुभूतिम् ॥ ४५ ॥

आमर्दकालेषु हठात्पतन्तं
हारं निरुन्धान इवादरेण ।
पस्पर्श हस्तेन विटः पटीयान्
वक्षोरुहं कश्चन वारिजाक्ष्याः ॥ ४६ ॥

सश्रीकमग्रे सरसीरुहाक्षं
कान्ताननं कामपुमर्थसिध्द्यै ।
पश्येति यूनः पटुवाक्यमेका
विचार्य कान्ता विनताननाऽसीत् ॥ ४७ ॥

उदन्वदूर्मिस्वनसोदरीभि-
रुत्तानतालध्वनिधोरणीभिः ।
कर्णेन्द्रियोन्मेषमिव प्रजानां
कालुष्यमन्तस्थमपि क्षिपन्तः ॥ ४८ ॥

पद्माक्षमालाभिरलंकृताङ्गाः
भक्तिप्रसूनोदयवल्लरीभिः ।
मूलानि मुक्तेर्मुहुरुद्गिरन्तो
नामानि नालीकविलोचनस्य ॥ ४९ ॥

हर्षाश्रुपूरैरभिषिक्तगात्राः
नीरन्ध्रनिर्यत्पुलकप्ररोहाः ।
नृत्तोपपन्ना निबिडीभवन्तो
भक्त्याऽन्वगच्छन्भगवन्तमन्ये ॥ ५० ॥

आटीकमानं कमनीयभावं
धाटीविशेषेषु विहङ्गनेतुः ।
निरीक्ष्य शौरिं निखिला जनौघाः
निरर्गलं कौतुकमन्वभूवन् ॥ ५१ ॥

अभ्येत्य किन्नु श्रुतिभूषणत्वं हरेरशेषश्रुतिभूषणस्य ।
वतंसपुष्पं प्रणनर्त हर्षाद्विगोपपन्नेषु गतागतेषु ॥ ५२ ॥

विहङ्गराजस्य विहारचारे
हारो हरेर्वक्षसि कम्पते स्म ।
अहिभ्रमान्मामहिमर्दनोऽसौ
जवाज्जिघृक्षेदिति शङ्कयेव ॥ ५३ ॥

॥ ग ॥ इत्थं विहारयात्रोत्सवविहितभावे देवे, सोऽपि कविकथककण्ठीरवगुरुरकुण्ठितां भक्तिमन्तर्वहद्भिः अन्तेवसद्भिः सह सत्वरमागत्य, निखिलजगदासेचनकप्रभावन्तं निगमपरिषदाम्रेडितप्रभावं तं भगवन्तमधिरूढविनतानन्दनमभिवन्दनपूर्वकमपूर्वविस्मयविस्तारिताभ्यामानन्दपयःसन्दोहसान्द्राभ्यां लोचनाभ्यां आपीठमामौळि च बद्धाञ्जलिपुटः पुलकमुकुलिततनुरनुबभूव ॥

पद्माभीष्टं तद्वहन् धाम दिव्यं
प्राचीनोक्तिव्रातरूपः पतङ्गः ।
अग्रे दीव्यन्नस्य वेदान्तसूरे-
र्नेत्राम्भोजं निर्निमेषं व्यतानीत् ॥ ५४ ॥

॥ ग ॥ ततस्सरभसमर्चकजनोपनीतं सर्वतोमुखप्रमुखैरपि सम्भावनीयं देवस्य दनुजद्विषो दिव्यमालिकादिकमतिदूरमवनतिमासेदुषा शिरसा स भक्तिजुषामग्रेसरः प्रतिजग्राह । तत्क्षणे तथाविधवरदाभिरूप्यत्रिलोकनविस्मयमान-

मानसः कविकथककेसरिगुरुः 'तुरगविहगराज' इत्यादि-श्लोकविशेषभूषितां कामपि कलितकविकुलकुतूहलविततिं स्तुतिं वरदराजपञ्चाशदभिख्यां विख्यातिभृतामचरमो निरमिमीत ॥

जायापराधीनभुजान्तरालं
छायापराभूतपयोदडिम्भम् ।
युवानमासाद्य तदुक्तिकान्ता
नवान्विलासान्मुहुराततान ॥ ५५ ॥

॥ ग ॥ व्यधत्त च चित्ते स दुर्वादिजनदन्तावलयन्ता चिन्तामिमाम्— अहो देवस्य विहारयात्रामहोत्सवविभवानामलोकगम्यमौपम्यम् । इह किल बहुविधविभूतिविलसितमात्मानममीषां जनानामक्षिपथाध्वनीनमारचय्य, किमपि वचसामगोचरं कुतूहलमुत्पादयता भगवता मुक्तिरपि पुनरुक्तिमनायीति ॥

कुञ्जराचलधौरेयं सञ्चरन्तमितस्ततः ।
कौतुकादनुवव्राज कवितार्किककेसरी ॥ ५६ ॥

वीथीषु वीथीषु विहारभेदानाह्लादवर्षी हरिराकलय्य ।
वेगादपावृत्य पुनर्जगाहे वेतण्डशैलेन्द्रतटीकुटीरम् ॥ ५७ ॥

श्रीदेवाधिराजपरब्रह्मणे नमः



श्री वरदराजः (उत्सवमूर्तिः)

देवीभूषणहेत्यादिजुष्टस्य भगवंस्तव ।
नित्यं निरपराधेषु कैंकर्येषु नियुंक्ष्व माम् ।।

(न्यासदशकम्)

निरन्तरं निर्विशतस्त्वदीयमस्पृष्टचिंन्तापदमाभिरूप्यम् ।
सत्यं शपे वारणशैलनाथ वैकुण्ठवासेऽपि न मेऽभिलाषः ।।

(वरदराजपञ्चाशत्)

सिन्धुराचलमारूढे सिन्धुराजसुतासखे ।
बन्धुराननतिरव्याजबन्धुराप स मन्दिरम् ॥ ५८ ॥

॥ ग ॥ इत्थमस्य मधुद्विषो देवस्य महोत्सवे विजृम्भमाणे तदतिशयावलोकनमपदिश्य समायातो विख्यातिविहारसीमा विद्यारण्यनामा यतिरमुष्य वेङ्कटनाथगुरोः कविकथकसिंहताबिरुदमसहमानः कथाहवकौशलं निजं दिदर्शयिषुः सविधमाजगाम ॥

मध्यस्थान्मतिवारिधीन्बुधजनान्कृत्वा मनःसंमतां-
स्तर्के व्याकरणे तथैव निगमत्रातावतंसेष्वपि ।
प्रौढां युक्तिपरम्परां नवनवामादाय वादाहव-
प्रारम्भं प्रथयाम्बभूवतुरिमौ प्रज्ञावदग्रेसरौ ॥ ५९ ॥

सन्ध्यानान्नटदिन्दुचूडमकुटीसम्भ्रान्तदिव्यापगा-
निर्व्याघातसमुद्यदूर्मिसहजान्प्रत्यर्थिशिक्षाक्षमान् ।
वादे तत्र ववर्ष वेङ्कटगुरुर्वाचां भरानद्भुतान्
प्रत्यग्रेतरभारतीप्रभृतिभिर्मानैः सनाथीकृतान् ॥ ६० ॥

॥ ग ॥ तेन कथकजनमूर्धन्येन गुरुणा तदानीमुपन्यस्तमनन्यसामान्यं युक्तिकदम्बकं विशेषदर्शनमिव भ्रान्तिं, क्षान्तिविलसितमिव रुषं, वासरमुखमिव वासतेयीं, प्रभाकरतेज इव प्रालेयधारां, प्रपदनमिव प्रारब्धवृजिन-

धोरणीं, विद्यारण्यभणितिमपनीय मनीषिजनमनसि मुदमजीजनत् । तदा खलु कथासमरसमुचितवचोनिकरशरधारावितरणकलावलाहकेन निगमशिखरदेशिकेन निराकृते जीवपरयोरभेदवादे शासितेषु शास्त्रैक्यकथाविद्वेषिभाषितेषु साधिते बाधितानुवृत्तिभङ्गे प्रतिक्षिप्तलक्षणायां ब्रह्मपदलक्षणायां शमिते शाब्दापरोक्षपक्षे समापिते साधनचतुष्टयपूर्वभावाभिलापे निर्वापितायां निर्विशेषविषयनिर्विकल्पककथायां अदृश्यत्वं नीते दृश्यत्वानुमाने प्रख्यापितबाधे परब्रह्माधिकरणबोधे प्रकटितभङ्गे जीवन्मुक्तिप्रसङ्गे भावितलोपे भावरूपाज्ञानप्रलापे विघटितविहारेषु ब्रह्मावाच्यताव्यवहारेषु जातनिरासेषु ज्ञातृत्वाध्यासवचोविलासेषु उद्घाटितायामुपदेशानुपपत्तौ आकलितायामखण्डवाक्यार्थखण्डनकलायां, अम्बरकोरकीकृतायामविद्यास्वरूपवर्णनायां, निरूपितनिस्तारेषु भेददूषणविस्तारेषु, निर्णीते निमित्तोपादानैक्ये समर्थितायामहमर्थात्मतायां प्रतिष्ठापिते विशिष्टाद्वैते सन्दर्शितायां सगुणनिर्गुणश्रुतिव्यवस्थायां प्रपञ्चिते पयोजलोचनपारम्ये सूचिते सूत्रस्वारस्ये सिद्धान्तेषु पञ्चरात्रपरिपन्थिसिद्धान्तेषु शमितेषु शंखचक्राङ्कविरोधिशङ्कातङ्केषु निखिलगुरुजनपरिगृहीता निगमपदवी निरवद्या व्यद्योतत ॥

ततःपरं पराभूतस्तं गुरुं विनयोक्तिभिः ।
विशेषाद्बहुमन्वानो विद्यारण्ययतिर्ययौ ॥ ६१ ॥

॥ ग ॥ तदनु, तस्य विद्यारण्यस्य वादाहवाहन्तोदय इव वसन्तेऽपि व्यपायमुपेयुषि स्वदमानकोदण्डवेतण्डकरविकीर्णार्णः शीकरैरिव सुरभिनिर्जयायार्जितयशःप्ररोहैरिव मल्लिकानिकरैर्विरहिजनधैर्यानलमन्दीकरणमणिभिरिव क्रीडावनविहरमाणमन्मथनृपालमङ्गलप्रदीपैरिव पाटलैरपि सौरभं किमपि सर्वजनमनःप्रियङ्करमंकुरयन्, प्रतिपथसमुल्लसत्प्रपापालिकारमणीवदनरामणीयकविलोकनव्यासङ्गिपथिकलोक-विस्मृतप्रस्थानव्यापारः, मलयजप्रायानुलेपान् मौक्तिकप्रायविभूषणान् पल्लवप्रायपरिस्तरणान् पद्मिनीदलप्रायव्यजनान्, कर्पूरप्रायवीटिकान् कान्ताजनानातन्वन् तृष्णातरलमृगकुलविलोचनशफरमेदुरान् मृगतृष्णाजलधीन् दिक्षु दिक्षु लक्ष्यानक्ष्णोराकलयन्, असहिष्णुरङ्गाङ्गसङ्गविहाराणा, मावसरिकरसलिलकेलीना, मन्तरायो दन्तावलमदाना, माज्याहुतिररण्यज्वलनाना, मपूर्वोत्तेजनमम्बरमणेः वैजननश्वक्रवातानां वैतण्डिको वासन्तिकवैभवानां संवर्तसमयनृत्यदनलपर्यायसूर्यातपनिःशेषविशोष्यमाणनिखिलसरिदोघो निदाघः स्वात्मानमिव शुचितया विख्यातिमुद्वहन्तमाचार्यं बहुमन्तुमना इव समाययौ ॥

निदाने वनदाहस्य निदाघे समुपागते ।
स्वागतं मधुरैर्नादैराततान वनप्रियः ॥ ६२ ॥

अह्नां पत्यौ शीततामत्र हन्तुं बिम्बव्याजादम्बुपूरं प्रविष्टे ।
त्रस्ता तस्मात्साऽपि निष्क्रम्य लिल्ये वक्षोजाद्रौ
वारिजाक्षीजनानाम् ॥ ६३ ॥

॥ ग ॥ समये तत्र सरस्सु सह सहचरैर्विरचितावतारा: तारावलीव्यामोहावहवक्षोजतटविकीर्णवारिशीकरा: कराकलितशृङ्गविनिर्गलदम्बुधारासेचितदयितवदनसीमा: सीमातिलङ्घितरङ्गपरम्परानुषङ्गपरिकलिताङ्गरागा: रागाधिकरमणोपहृतकमलकह्लारकुमुदकुवलया: वलयावलीशिञ्जितवाचालितहरितो हरितोपलभूषणनिर्विशेषनिजाङ्गानुषङ्गिशैवला: वलाहकाकारविलुलितचिकुरचयविलोकनकान्दिशीककलहंसकुला: कुलाचलसखकुचाहतिक्षुभितजलाशया: शयारविन्दसन्ताडितसलिलरवंरचितरथाङ्गमिथुनापनयना: नयनाधिगतारुण्यास्तारुण्यावतारदीप्रमदा: प्रमदा: विलासिहृदयचोरान् विहारान् विरचयाम्बभूवु: ॥

विहृतौ विपुलेक्षणामणीनां
दलिते हारतुषारधाम्नि तूर्णम् ।
कुचकोकयुगो ननर्त को वा
कुतुकं नाञ्चति कुण्ठितेऽभियातौ ॥ ६४ ॥

तस्मिन्ग्रामे तापवेगं बुधानां
त्वय्यन्तार्थस्वादुमाध्वीकवर्षैः ।

प्रत्यादिश्य प्रत्यहं वेङ्कटेशो
वाचां दूरं व्यञ्जयामास हर्षम् ॥ ६५ ॥

॥ ग ॥ अनन्तरं चरमेतरहरिदन्तरावतीर्णसमीरण-विकीर्णकुटजकेतककन्दलकदम्बरजःकदम्बविसृमरपरिमला - भिलाषबम्भ्रम्यमाणबम्भरनिचयपरिचयोपचीयमानैः अम्बर-तटाकविजृम्भदम्भोजिनीदलानुकारिभिः अयुतजनमनःसमु - न्मीलदसमशरानलकन्दलितधूमसन्देहावहैरम्भोवाहैरन्धका - रितदशदिशावकाशः, जगतीतलविहारिमनसिजमहीपालसमु-च्चितमहनीयनीलनीरदवितानान्तरामुक्तमुक्तासराकल्पकल्प - पयोधारासान्द्रः, सान्दृष्टिकश्चातककुलानां, सौविदल्लश्चक्राङ्ग-विहङ्गविद्रावणस्य निगडविशेषः पथिकानां, निशीथो नीर-जाक्षीनिद्राविलसितस्य, नास्तिको नालीकवनानां, प्रत्यूहः प्रभाकरतेजसां, अरणिरचिररुचिपावकस्य, कृष्ण इव कृता - र्जुनामोदः, दाशरथिरिव दर्शितकबन्धनिपातः, सुमित्रासुत इव सूचितमेघनादभेदः, सायंसमय इव शिखिसमुल्लासहेतुः, परिव्राडिव परिगृहीतकरकः, पृथिवीपतिरिव प्रथमानवाहिनी-सनाथः, प्रौढयोगीव प्रशान्तरजःप्रचारो दिग्गजगलकुहर-निर्गतगर्जितगरिमधिक्कृतिचतुरघनाघनस्तनितजनितभयप - तगपरिषद्विमुक्तवनागमो घनागमस्समजायत। तदानीं किल,

आवर्त्यमानेन मरुत्कदम्बैरम्भोदमन्थानमहीधरेण ।
विमथ्यमाने वियदम्बुराशौ दिव्यामृतं दृग्विषयो बभूव ॥६६॥

समयेन समन्मथेन साकं विहरन्तीषु तटिद्विलासिनीषु ।
निपतत्करकानिभप्रसूनैर्ववले तच्चिकुरैर्वलाहकौघैः ॥ ६७ ॥

अधिगगनमखण्डं मण्डलं चण्डभानोः
स्पृशति जलददम्भादुत्थितः सैंहिकेयः ।
इति भुवनगताभिः पद्मिनीभिर्निलिल्ये
मधुकरकुलगर्भं मानयन्तीभिरन्तः ॥ ६८ ॥

बिभ्रती क्षणमरीचिपताकां गर्भिताम्बरमणौ गगनाब्धौ ।
कालनाविकवरेण विमुक्ता कालिकातरणिरुल्लसति स्म ॥६९॥

व्योमनृत्तपरचञ्चलानटीपादविच्युतमलक्तकद्रवम् ।
शक्रकोपनिचयं शशङ्किरे विद्रुमप्रतिमविग्रहं जनाः ॥७०॥

गगनवटतरोर्गभीरवातैरभिगतिमेत्य पयोदपालिशाखा ।
अनुकलमहिभेदिकोपदम्भात्फलनिचयं विचकार दिक्षु दिक्षु ॥

विषोल्बणान्वारिदपन्नगेन्द्रान् विशृङ्खलं नर्तयतेऽनिलाय ।
कदम्बधूलीकपटाददात्किं कालो नृपालः कनकाम्बराणि ॥७२

जरीजृम्भद्वीचीविचलिततटीकैतकपत-
द्रजोराजिव्याजान्मलयजभरालेपमुचितम् ।
वितन्वानाः फेनावलिनिभदुकूलेन ललिताः
सरस्वन्तं कान्तं सरभसमसेवन्त सरितः ॥ ७३ ॥

समन्तादुल्लोलैः सलिलधरकल्लोलनिवहैः
समुल्लासं कश्चिद्व्रजति तटिता विद्रुमवति ।
नभःपारावारे नवजलजशोभां विदधिरे
बलाकानां माला बहुलरुचिविद्योतितदिशः ॥७४॥

चञ्चलाभरणोपेतां चञ्चत्पृथुपयोधराम् ।
आखण्डलदिशं श्यामामस्फुटं सस्वजे रविः ॥ ७५ ॥

उत्सवं वृषमहीभृति शौरेरुत्करैर्दिविषदामुपलाल्यम् ।
वीक्षितुं गुरुरनेहसि तस्मिन् विश्वहृद्यविभवोऽभिललाष ॥७६॥

इति

# वेदान्ताचार्यविजये चम्पूप्रबन्धे
# चतुर्थः स्तबकः

---

कल्पद्रुः कविवादिसिंहविदुषः प्रज्ञासुधावारिधेः
जातः कश्चन कल्पितार्थविततिश्चम्पूप्रबन्धात्मना ।
वर्षन् वेदवतंसदेशिककथामाध्वीं तुरीयो महा-
नस्यासौ स्तबकः करोतु सुमनःकर्णावतंसश्रियम् ॥



अथ

# वेदान्ताचार्यविजये चम्पूप्रबन्धे

## पञ्चमः स्तबकः



अथ वृषशिखरीन्दोर्वन्दने साभिलाषः
सह कृतिभिरनेकैः सार्वभौमो गुरूणाम् ।
कविकथकमृगेन्द्रः कौतुकादेष काञ्च्याः
निगमजलजसूर्यो निर्ययौ नीतिसिन्धुः ॥

॥ ग ॥ स गुरुकुञ्जरः कुञ्जरममाणगन्धर्वकान्तातन्तन्यमानमञ्जुतरगीतरवद्रवीकृतदृषन्निष्यन्दसन्देहावहशृङ्गसङ्गिगगनसरिदम्भःक्रीडारम्भसम्भृतसम्भ्रमविबुधवधूविधूतचिकुरभरसौरभसर्वस्वहरणधूर्वहसमीरचोरसञ्चारसमुचितदर्यन्तशालिपर्यन्तशोभितं वासवपुरीगोपुरदरीराजदमरीराजिकबरीकान्तिलहरीतिमिरभरसंदर्शनकन्दलितविप्रयोगसमुत्पादकविभावरीसमागमशङ्कावशापुनःपुनरुपक्रान्तकन्तुसंगररथाङ्गमिथुनपक्षविक्षेपविकीर्णविकचकुमुदकुवलयकोककोकनदपरागपरम्पराकर्बुरितकल्लोलशतकलिततया कनदाखण्डलकोदण्डकरम्बितमम्बरं विडम्बयता मधुसमयेनेव मधुरसघनपुष्पजुषा निर्जरपथेनेव राजहंसनिषेव्यमाणेन शराग्रेणेव शैत्यशालिना मानसमदकारि-

णाऽपि मानसमदहारिणा सरःसहस्रेण समुल्लसितं, अनवरतविहारिकुहूमुखमुखदलितमञ्जरीपुञ्जनिष्यन्दिमकरन्दधाराभिरुपान्तसञ्चारिणीमुष्णकरमण्डलीं शिशिरकरबिम्बनिर्विशेषामिव कर्तुमसकृदभिषिञ्चद्भिरमरसरिदन्तःकन्दलितसारसवननिवासिसारसवधूसरसगीताकर्णनसुखपरवशनिद्रायमाणशाखाञ्चलकुलायकुहरशायिशकुन्तशावकैः कण्डूयनपरकरिकरटगलितमदसलिलसेकसंवर्धितैः सरसिजवासिनीनिवाससेवाभिलाषविहितसमागमवेगपरिश्रान्तपद्मयदलितचतुर्मुखप्रमुखसुरपरिषन्निषेवितनिजच्छायामण्डलैः माकन्दकुन्दसिन्धुवारमधूकमरुबककुरबकचम्पककृतमालतमालप्रियालप्रायैः पादपैः प्रसाधितं, निजशावशङ्कया निकटतटपर्यटन्मृगाङ्ककलङ्काघ्राणमनेकधा विदधानाभिर्हरिणीभिरविरलीकृताभ्यन्तरं, सन्ततसहचरदन्तावलदन्तान्तकण्डूयनसुखितकण्ठीरवप्रकाण्डं, निजफणामण्डलसन्ताडनलीलासन्तोषितमयूरमुखाघ्रातमस्तकवातन्धयस्तनंधयं, शश्वदपि शाखामृगकरतलचर्मक्रियमाणतापसाश्रमतरुगणालवालम् , अनुवादममरगिरेः, प्रतिसर्गं प्रालेयशैलस्य, विकल्पं विन्ध्यस्य, मूर्त्यन्तरं मन्दरस्य, भुवनभागधेयमिव भूधररूपेण परिणतं, सागरमिव सन्तानवितरणप्रवीणं अहर्मुखमिव जगच्चक्षुराविर्भावकारणं सत्पुत्रमिव वंशालङ्कारं समरप्रवृत्तमिव सर्वतो विचलितखड्गं सरस्तल्लजमिव समुल्लसितपुण्डरीकं

सव्यसाचिनमिव कृष्णसारसनाथं अब्धिकन्यापयोधरमिव हर्यक्षविहरणस्थानं दिनान्तमिव दीव्यदृक्षशतं पद्मासखमिव परिचितपन्नगाशनावस्थानं परिस्फुरितवनमालं च, सुग्रीवसैन्यमिव सुव्यक्तगजगवयशरभं, शृङ्गिबेरपुरमिव गुहालङ्कृतं, वर्णिनमिव विततमेखलं, नीहारकरमिव नीललोहितशिरोरत्नं, अचलमपि प्रकटितप्रपातं, हरिणाङ्कमपि परिसरविस्मरगहनान्धकारं, क्षमाभृतमपि समुपनतशतमन्यु, मखिलहृदयरञ्जनमञ्जनाचलमाससाद ।

यत्राधिशृङ्गमुदितानि सुरस्रवन्ती-
स्रोतांसि सूर्यतनयापरिरम्भशोभाम् ।
स्वेच्छावगाहसकुतूहलसिन्धुरेन्द्र-
गण्डस्थलीगलितदानजलैर्भजन्ते ॥ २ ॥

वहन्मूर्ध्नामन्तःस्फुरितहरिदन्तान्मणिगणान्
अनन्ताभिख्योऽयं स्फुटरुचिरनन्तोद्वहनतः ।
विषस्रोतो मुञ्चन्विविधमहिमव्याकृतिकला-
प्रवीणः प्रख्यातं फणिपरिबृढत्वं कलयति ॥ ३ ॥

परेशृङ्गं विहरणवशात्प्रच्युतिं नीयमानां
वक्षोजेषु त्रिदशसुदृशां कुङ्कुमालेपलक्ष्मीम् ।

वप्रक्रीडाचटुलगजतादन्तघातैरुदीर्णा
धातुक्षोदा विदधति पुनर्यत्र वातैर्विकीर्णाः ॥ ४ ॥

॥ ग ॥ यश्च शिखरसीमोदरगतदामोदरभजन-कामायातसुररामानीतपारिजातकलिकापरिपलितमाध्वीक धाराभिषिच्यमानतया सकलगिरिकुलसाम्राज्याभिषेकसम्पदमनुभवन्निव सम्भाव्यते ।

प्रायेण शिखरे यस्य प्रालेयकिरणश्चरन् ।
करोति करटीन्द्राणां कर्णचामरचातुरीम् ॥ ५ ॥

निस्साधारणशातमन्यवमणीनिर्यन्मयूखावली-
नित्याश्लेषवशेन कामपि रुचं नीलोत्पलश्रीसखीम् ।
बिभ्राणानपि शारदान् जलधरान्यच्छृङ्गसीमान्तरे
पश्यन्तः शिखिनो दिशो विदधते केकारवैराकुलाः ॥ ६ ॥

॥ ग ॥ तमचलेन्द्रमुद्वीक्ष्य तुष्यन् स गुरुराम्नाय-रहस्यैकवेदी मनस्येवमकरोत् । "अहो ! वहोः कालादद्य किल सफलो मत्सङ्कल्पकल्पतरुः, यदयमनिदम्प्रथमफणिति-परिषदधिगतमहिमा महीधरो नयनपथमधिरोहति । अत्र खलु जनानां चिरन्तनसुकृतफलमेव निरन्तरनिवासलाभः, यत्र प्राक्तनैरपि कृतिभिर्जग्मुषां तस्थुषां वा जन्म वैदिककण्ठ-वचनैरुदकण्ठि । किञ्च, अस्यावनीधरपतेः कमनीयता कस्य

वा हृदये न कौतुकमुत्पादयति, यत्र भगवानपि त्रिधामा परमव्योमपयःपारावारपद्मिनोपरिबृढबिम्बेषु स्थानेष्वपर्याप्त-प्रीतिरन्यादृशहर्षनिर्भरो निवसति ।

इति संचिन्तयन्ननन्तः प्रतिवादितमो रविः ।
अनुगैस्सह तस्याद्रेरध्यरुक्षदधित्यकाम् ॥ ७ ॥

॥ ग ॥ तत्र स गुरुः अच्छाच्छतया स्वादुतया च बहिरापतितभगवदनुकम्पारसभरशङ्कामङ्कुरयन्त्या, मति-पावनतीर्थसेवादरादवतीर्णस्य तत्रभवतो मृडानीपरिबृढस्य मज्जनोन्मज्जनचलिताच्चूडाचन्द्रादभितो विगलितैरमृतद्रवै-रापूरिततया शीतलिमानमद्भुतमुद्भावयन्त्यां, अपाकृतबाह्य-करणव्यापारैरर्धनिमीलितलोचनैरब्धिकन्यारमणचरणध्यान-रसनिभृतावस्थानै, रष्टाक्षरमहामन्त्रजपपरिस्फुरदधरदलैरनेकै-र्महात्मभिरासेव्यमानपरिसरायां, स्वामिपुष्करिण्यां निर्वर्तित-स्नानादिनियमकलापो निर्मलवसनभासुरो निभृतोर्ध्वपुण्ड्र-भूषितः कण्ठावसक्ततुलसीनलिनाक्षमालिको विनयाधिकै-र्वृषगिरिनिवासिजनैरुचितमारचितसमुपचारो नीररुहवासिनी-निवासनिकेतनाभिमुखो निरगच्छत् । एवं निर्गतो गुरुरग्रत एव विपुलमणिखचिततया विद्युत्कलापमिव विश्वव्यामोह-फणधरविद्रावणं बाडबज्वालावलयमिव प्रणमदघनिवहाम्भोधि-

विजृम्भणासहं, प्राभातिकविभाकरमिव प्रबोधजलजविकासापादकं, कनककिरीटमिव कण्ठीरवमहीभृतः, किमपि कमलानिवाससदनसरसिजकर्णिकोपमानं विमानमद्राक्षीत्। अवेक्ष्य च विस्मयपरवशतया त्वरिततरं कतिचित्पदानि कलिताञ्जलिर्ययौ। अथ तस्य विमानस्य गर्भदेशे निर्भरजृम्भमाणरत्नाभरणकिरणरञ्जितविग्रहतया परितो निपतितबालातपस्य तमालपादपस्य, मथनसमयसमधिगतमन्दरगिरिगैरिकरजोलेपस्य महोदधेः, सायन्तनपयोदमेदुरस्य नभसः, खेलिनीकुचकुम्भपरिरम्भलग्नकुङ्कुमपङ्कानुलेपस्य शम्बराराते:, अम्बुजपरागपारम्परीभरितस्य कालिन्दनन्दिनीपयःप्रवाहस्य च समतामवतारयन्तम्, निर्मलतरयोगिजनहृदयनित्यानुषङ्गादिव संक्रान्तमवदातभावमखिलजगदासेचनकमासेदुषीभिः, भक्त्या विनतस्य भवानीविटस्य जटापल्लवपालिकायामभिनवप्रसूनसम्पदमवतंसचन्द्रपरिसरे तारानिकरवैखरीं मौलिमन्दाकिनीपयसि च विकचकुमुदद्युतिं विस्तारयन्तीभिः सत्त्वगुणबीजराजिभिरिव सनकादिहृदयकेदारावापसमुचिताभिः फेनावलीभिरिव पादपीठघटितमरतकमयूखनिकरमहार्णवोदीर्णाभिः चरणनखरेखाभिरुपशोभमानम्, निगमतरुशिखरोदितेन निरपायामोदवर्षिणा निकटतटनतविधिमकुटतटनिहितमणितरणिगणकिरणकबलितेनाऽपि तान्ततामनाददानेन महर्षिजन-

मनीषावधूवतंसायमानेन पदपल्लवयुगळेन समुल्लसितं, कर-
कमलकलितरथपदरुचिचौर्यापराधपरिजिहीर्षया चरणमाश्र-
यता रविणेव रत्नहंसकेन रमणीयं, रमाधरणीधिषणानटी-
नटनारम्भोचितस्तम्भोपमाभ्यामूरुभ्यामुद्भासितं, चराचर-
निर्माणचतुरचतुराननवर्गसर्गनिर्गतनाभिविख्यातिपरम्पराभि-
रामेण क्षौमेण प्रसाधित, मगाधतापरीक्षाभिलाषिनवयौवन-
प्रसारितरोमावलीयष्टिपातभीत्या नाभिवल्मीककुहराद्बहिर्निर्ग-
तेन काकोदरेणेव काञ्चीदाम्ना विसृमरमहानीलरुचा वेष्टित-
कटीतटं, नाभीनलिनपरिमलादरावतरदलिमालिकानुकारिण्या
हारोरगोद्वान्तगरलधारोपमया विशृंखलविजृम्भितकौस्तुभ-
दीपदीधितिभराभिभवचकितनाभीगुहावगाहनपरश्रीवत्सरुचि-
तिमिरधोरणीव्यामोहमावहन्त्या रोमलतया विराजमानम्,
तरुणतुलसीदलनिचयखचितां निशामिव निबिडोपलिप्त-
चन्दनचन्द्रिकोदयनिदानभूतां वारिदरेखामिव वक्षस्तटाधिरूढ-
ळक्ष्मीसौदामिनीसहचरीं तमस्ततिमिव कौस्तुभकान्तिसन्ध्या-
समिन्धानाम्, वसुमतीमिव वारिधिसुतासाम्यलाभाय वक्षो-
मध्यमध्यासीनामुदारां मालिकामुद्वहन्तम्, असुरवरूथिनी-
प्राणानिलास्वादभुजङ्गैरभितो वितायमानश्रुतिलतिकोपघ्नतरु-
भूतैः भुजैरुद्योतमानम्, उद्धूयमानचामरपवनावधूतकर्णाव-
तंसकह्लारगलितरजोरेखाकारेण कनकाम्बरेण कलितोत्तरीयं,

लोचनायमानलोकबन्धुरजनीकरालोकयोगविकचाभ्यामुदग्र-करकान्तिपूरोदञ्चितराजीवकैरवाभ्यामिव रथाङ्गशंखाभ्यामलङ्कृतकरं, रमावदनराकानिशाकरालोकविजृम्भदनुरागजलधि-परीवाहझरीसन्देहदायिनीं मन्दस्मितकुसुममकरन्दायमाना-मधररुचिमाविष्कुर्वाणम्, अतुलकुण्डलहरिनीलरुचिधारा-विधुन्तुदविरचितमुखविधुबिम्बग्रासावलोकनादिव करुणासरित्तरङ्गेषु कलितावगाहैरपाङ्गैः शरणागताननुगृह्णन्तम्, निज-वदनवनजातविहरदिन्दिराहृदयहरिणवेधोचितभ्रूलतारूप - चापोन्मुक्तकुसुमशरचरमसायकाकारं अधररुचिबालातपा-गमनशङ्कया प्रबलचिकुरतिमिरनिकरान्तःप्रवेशमाकलयितु-मुत्पतित, मन्तरा ललन्तिकाचन्द्रिकानिरुद्धं भ्रूतिमिररेखा-मध्यखण्डमिव हरिणमदतिलकं दधानम्, उत्तुङ्गमुक्ता-किरीटरूपादुर्वीधरराजादुद्भूय वदनद्युतिजलधिमधिगच्छन्ती-ममरस्रवन्तीमिव ललन्तीमाबिभ्राणं, माधवमपि मदनमदा-पनोदनरुचिशालिनम्, अञ्जनगिरिवासिनमपि निरञ्जनगिरि नियतावस्थान, मादिमं पूरुषमागमान्तगुरुरद्राक्षीत् ॥

नवीनघनविग्रहं नतवितानसानुग्रहं
सरोरुहविलोचनं सदयमापदां मोचनम् ।
वृषाचलपरिष्कृतिं वृजिनधोरणीनिष्कृतिं
प्रणम्य स विभुं ततः प्रमदमभ्यगादन्ततः ॥८॥

॥ ग ॥ स पुनःपुनरङ्गमङ्गमपि शार्ङ्गधन्वनो वि-
लोकयितुमादरमधिकमासेदुषा मनसा प्रसह्य नीयमान इव
सविधभुवमतितरामविन्दत ॥

विख्यातलक्ष्मीलतिकानुषङ्गो
विद्योतितः कौस्तुभपल्लवेन ।
शाखाञ्चितः कश्चन कल्पशाखी
श्रान्तिं दृशोरस्य पराचकार ॥ ९ ॥

कथं न चित्राय कवेर्यदेत-
द्विलोचनाब्जं विधुसंनिधाने ।
विकासमञ्चन् मुमुचे विशेषान्
मरन्दमानन्दपयोमिषेण ॥ १० ॥

॥ ग ॥ ततःपरमाराधकजनैरर्पितमतिपावनं भगव-
दंघ्रितीर्थमन्तरुपयुज्य गुरुरयमतिदूरमवनतेन शिरसा शेषा-
पटादिकं प्रतिगृह्णानः, सुदृग्जनहृद्यपद्यरत्नावलीसमुल्लसितं,
दयाशतकं नाम स्तोत्रं देवस्य दयाप्रधानस्य प्रीणनाय
प्रणिनाय ।

कविहृद्गृहरत्नदीपिकां कमलाकान्तदयास्तुतिं क्षणात् ।
विरचय्य वृषाद्रिसज्जनैरनुयातो गुरुरभ्यगाद् गृहम् ॥ ११ ॥

आविरास हरिदन्तवासिनां हर्षमन्तरसमं समावहन् ।
वेदकाननविहारिकेकिनो वेङ्कटाचलपतेस्ततो महः ॥ १२ ॥

मासि भाद्रपदनाम्नि जृम्भितं माधवस्य महनीयमुत्सवम् ।
अन्वभूदमितभक्तिवाहिनी जन्मभूमिभृदसौ गुरूत्तमः ॥१३॥

विसृत्वरेण सत्त्वेन विद्राविततमोगजः ।
काकोदरगिरौ रेमे कवितार्किककेसरी ॥ १४ ॥

अजरामरताविधायिनीमनिदम्पूर्ववचःशिखासुधाम् ।
विततार स बोधवारिधिर्विबुधानां सदने दिने दिने ॥ १५ ॥

एवमनेन गुरुणा नीयमानेषु दिनेषु,

विद्यारण्ययतिः कथाहवविधौ काञ्च्यां पुरा निर्जितः
स्मारं स्मारमनन्तसूरिजनुषस्तत्तादृशीं वाग्झरीम् ।
आश्चर्याम्बुधिवीचिमग्नहृदयो वाणीमभाणीदिमा-
मभ्यर्णे विजयाभिधाननगरीनाथस्य विद्यानिधेः ॥ १६ ॥

॥ ग ॥ "राजन् ! हितपरेण मयाऽभिधीयमानमिदमादरादाकर्ण्यतामत्रभवता भवता । अस्ति खलु निखिलविद्वज्जनललामभूतो, दाता विनीतजनाभ्यर्थितविद्याविशेषाणां, त्राता तथागतपर्याकुलनिगममर्यादानां, जेता कथाहवकौतुकिकौतस्कुतानां, विधाता विविधप्रबन्धानां, परिणेता पाराशर्यादिवाग्वनितानां, प्रमाता प्राचीनवचोवतंससदर्थविशेषाणां, कलिकलुषकदलीविदलनगन्धसिन्धुरो वेङ्कटनाथो नाम गुरुधुरन्धरः ॥

शान्तेः शुद्धान्तसीमा विहरणसदनं विष्णुभक्तेर्विरक्तेः
 प्रादुर्भावप्रदेशः पटुतरकवितानर्तकीरङ्गभूमिः ।
क्षान्तेरास्थानमेकं निरवधिकरुणादुग्धसिन्धुर्नृपेन्दो !
 कल्याणानां निधानं कविकथकहरिर्नामतः शोभतेऽसं

आलोकेन दिने दिने विसृमरामामोदपारम्परीं
 आधत्ते सरसीरुहां समुदये देवस्त्विषामीश्वरः ।
सोऽयं वेङ्कटनाथदेशिकरविर्दत्ते विचित्रं भुवि
 स्मृत्या सज्जनमानसाब्जविततेरामोदमन्यादृशम् ॥१८॥

॥ ग ॥ स च भगवतो भाद्रपदमहोत्सव इति तत्सेवायै वेङ्कटाचलमागत इति श्रूयते । अवश्यमसौ गुणवश्येन भवता भद्रपदाभिलाषिणा राजधानीमिमां आनीय निगमान्तनन्दनीयोदन्तो बहुमन्तव्यः ॥'

विद्यारण्ये गिरमिमां व्यक्तीकुर्वति भूपतेः ।
उद्बोधजलधेरन्तरुदभूत्कापि चेतना ॥ १९ ॥
'देशं वा देशिकेन्द्राय सर्वस्वं वा महात्मने ।
वितीर्य धन्यमात्मानं विधास्ये विनया' दिति ॥ २० ॥

अथ नृपतिमतं विचार्य विद्या-
 विपिनयतिर्विततेन कौतुकेन ।
कविकथकहरेरुपागमाय
 व्यलिखदिमानि वचांसि पत्रिकायाम् ॥२१॥

'विख्यातिजलधे विद्वन्मयूरकुलवारिद ! ।
विज्ञापनमिदं चित्ते वेङ्कटेश विधीयताम् ॥ २२ ॥

आकर्ण्य कीर्तिमतुलां तव बोधसिन्धोः
अस्मन्मुखेन वसुधाबलशासनोऽसौ ।
अन्तःसमुल्लसिततावकभक्तिवेगात्
आम्रेडयत्यनघधीरिदमेव पद्यम् ॥ २३ ॥

अन्तस्वान्तमनन्तसूरिसुकृताकूपारचिन्तामणीन्
अध्यारूढहयाननाञ्चितमनःपाथोजसिंहासनान् ।
वाणीधोरणिवेगनिर्जितसुरस्रोतस्विनीडम्बरान्
प्राणान्कानपि भाष्यकारफणितेर्भद्रान्गुणैराद्रिये ॥२४॥

इत्यालपति भूपाले वृत्त्या सकलरञ्जके ।
कटाक्षास्तव दीव्यन्तु करुणापरिरम्भिणः ॥२५॥

प्रसूनमिव लोलम्बः पाथोदमिव चातकः ।
महीबलजिदेष त्वां माननीयं दिदृक्षते ॥ २६ ॥

सहशिष्याय भवते सर्वं च धनसंचयम् ।
प्रणामैः सह साष्टाङ्गैः प्रदातुमयमिच्छति ॥२७॥

विनिस्सृते त्वद्वदनारविन्दात् सरस्वतीसारमरन्दपूरे ।
निमज्ज्य रन्तुं नियताभिलाषः समुज्जिहीते नृपचित्तभृङ्गः ॥

दयनीयमिमं महीपतिं महनीयादरमेदुरं च माम् ।
परितोषय बोधवारिधे नगरं प्राप्य नतैर्जनैस्समम् ' ॥२९॥

इत्थं वचोभिर्लिखितैः पत्रिकामुज्ज्वलां यतिः ।
प्राहिणोद्वेङ्कटेशाय प्रौढविद्वन्मुखेन सः ॥ ३० ॥

॥ ग ॥ तदनु, विनयधनैर्वृषगिरिशिखरमागतैः विबुधजनैरानीय समर्पितां विद्यारण्यविज्ञापनपत्रिकामादाय विचित्रधीराचार्योऽपि तद्गतानि वाचिकानि विचार्य, हन्त ! विविधविद्यावैशद्यमुपेयुषी विदुषामपि शेमुषी विचक्षणजनोचिताचारविचारपराङ्मुखीति विस्मयममन्दमविन्दत । स्वयमपि स विरक्तिसुरभिसम्भवकलशाम्भोनिधिः परितुष्टिहंसीपद्माकरो विज्ञानवीरुदुपघ्नतरुर्गुरुः कानपि 'सिलं किमनलं भवे' दित्यादिकानाह्लादिताखिललोका, नाशानलशमनसुधासेकान् श्लोकान् सद्यः पत्रिकायां विलिख्य विद्यारण्यवचसामुत्तरमुचितमुदञ्चयांचकार ॥

सिद्धान्तमित्थं गुरुणा निबद्धं
शुद्धान्तसिद्धान्तदृढव्रतेन ।
विज्ञाय राज्ञा सह विस्मयाब्धौ
नौकां न लेभे स यतिर्निमज्जन् ॥ ३१ ॥

॥ ग ॥ स पुनरेवं विद्यारण्यो ह्यातनोत् —

“ अहो महनीयमहिमा कल्याणगुणसान्द्रः कविवादिपारीन्द्रः, यदसौ स्वतः समुपनतामपि श्रियं सर्वकालसहचरविरक्तियोषिदीर्ष्याभयादिव न परिगृह्णाति, नूनमेतदात्मना महामोहपूरनिमग्ननानालोकोद्धरणपरायणो नारायणो भगवानजनिष्ट । तथा खलु स्मर्यते, ‘ साक्षान्नारायणो देवः कृत्वा मर्त्यमयीं तनुम् । मग्नानुद्धरते लोकान् कारुण्याच्छास्त्रपाणिना ॥’ इति ॥

विमर्शमित्थमातन्वन् विद्यारण्यः सभान्तरे ।
अन्वहं वाग्भिरग्र्याभिरपूपुजदमुं गुरुम् ॥ ३२ ॥

॥ ग ॥ अथ वप्रक्रीडाकृतक्षणमहोक्षकुलहुङ्कारमुखरदिगन्तरेषु मयूरनिकरमौनव्रतोपदेशदेशिकेषु सुरपथवीथिकावन्दनमालिकानुकारिशुकावलिषु विसृत्वरसप्तच्छदवासनाबन्धुरगन्धवहानुधावनधृतव्रतमधुव्रतेषु नृत्यन्नलिनवनलक्ष्मीनूपुरनिनदनिभकादम्बरवकरम्बितेषु शालीपालनपरशातोदरीगानरसानुभवनिभृताङ्गसारङ्गेषु धैनुकपयोधरनिरर्गलनिर्गळत्पयोधारापातपङ्किलीभूतभूतलेषु विकसितशारकुसुमविडम्बितविमलतारकेषु वासन्तिकवासरेष्विव परिस्फुरितपुष्पवदुद्यानेषु भगवदवतारेष्विव भुवनकालुष्यापनोदनेषु शारददिनेषु सञ्जातेषु,

अहिराजमहीभृदुत्तमाङ्गा-
दवरुह्य श्रुतिमौळिदेशिकेन्द्रः ।
पुरुषोत्तमपूर्वपुण्यदेशै-
रुपपन्नां दिशमुत्तरां जगाहे ॥ ३३ ॥

तीर्थव्रातेषु गङ्गाप्रभृतिषु विधिना गाहनं कल्पयित्वा
दिव्यस्थानेषु देवं जलनिधितनयाजीवितेशं निषेव्य ।
वाग्गुम्भैस्तत्र तत्र प्रतिकथकमदं वारयित्वा च सोऽयं
भूयः काञ्चीं प्रपेदे सह विनतजनैरादिमो वैदिकानाम् ॥३४

हस्तिशैलशिरोरत्नं वस्तु वाचामगोचरम् ।
प्राणंसीदयमारब्धत्राणं सीमा गिरां गुरुः ॥ ३५ ॥

विबुधपरितोषहेतोर्वेदान्तार्थान्मुहुर्विवृण्वानः ।
काञ्च्यां कालमनैषीत्कञ्चन कविवादिपञ्चवक्त्रोऽसौ ॥३६॥

॥ ग ॥ अथ कदाचिदखिलबुधकुञ्जरहृदयरञ्जन-मञ्जुलमतिविलसितनिर्वापितगीर्वाणगुरुगर्वाङ्कुरस्य विविध-गुणशेवधेः विजयनगरपतेरास्थाने विद्यारण्येन सममक्षोभ्य-मुनेर्मध्वमताध्वन्यमूर्धन्यस्य 'तत्त्वमसी' ति वाक्ये तरङ्गि-तवदावदामोदो वादः प्रादुरासीत् ॥

तदा समुद्दिता चिन्ता तस्य राजशिरोमणेः ।
तत्त्वनिर्धारणे दक्षस्तटस्थः को भवेदिति ॥ ३७ ॥

निधाय नृपतिः पश्चान्निश्चयं हृदि कञ्चन ।
वावदूकेन्द्रयोरग्रे व्याजहार शुभां गिरम् ॥ ३८ ॥

'प्रसक्ते युवयोर्वादे प्राक्तनोक्तिविदां वरम् ।
मान्यं वेङ्कटनाथार्यं मध्यस्थं मनुते मनः ॥ ३९ ॥

स हि सत्यस्य जीवातुर्विद्याविद्युद्वलाहकः ।
कथकाडम्बराम्भोधिकल्लोलकलशीसुतः ॥ ४० ॥

कविताकौमुदीदानकमनीयकलानिधिः ।
विवेकनलिनीकान्तविजृम्भणपुरोगिरिः ॥ ४१ ॥

कलिकैटभविध्वंसकलाकमललोचनः ।
प्राचीनवचनोद्यानप्रबोधमधुवासरः ॥ ४२ ॥

नास्तिकव्रातफणितिनलिनीहिमनिर्झरः ।
विनतस्तोमधीमल्लिविकासदिवसात्ययः ॥ ४३ ॥

पाराशर्यवचःसौधप्रसाधननवध्वजः ।
असूयारजनीभानुरहङ्काराचलाशनिः ॥ ४४ ॥

कामकान्तारदहनो रागरक्षोरघूद्वहः ।
दुस्तर्कतूलवातूलो दुरितद्विरदांकुशः ॥ ४५ ॥

सत्त्वसारसकासारो रजोव्यालशिखावलः ।
तमःप्रलम्बतालाङ्कः क्रोधवारिधिवाडवः ॥ ४६ ॥

शान्तिहंसीशरत्कालः शङ्कालङ्कानिलात्मजः ।
करुणातरुणीकान्तो भक्तिगङ्गाभगीरथः ॥ ४७ ॥

विख्यातिलतिकाशाखी विरक्तितटिनीगिरिः ।
श्रुतिहारगुणः श्रीमानिति सर्वैरुदीर्यते ' ॥ ४८ ॥

वाचं विद्यावतां हृद्यां वदति क्षितिपालके ।
ववृधे हृदये हर्षो वादिनोरुभयोरपि ॥ ४९ ॥

अथ पत्रेषु लिखितामनयोर्युक्तिसन्ततिम् ।
दर्शयन्ति स्म गुरवे राज्ञा केचन चोदिताः ॥ ५० ॥

॥ ग ॥ स च कर्मब्रह्ममीमांसामर्मवेदी कविकथकपञ्चाननाचार्यो महता महीभृता प्रेरितैर्मनीषिभिराहृतमक्षोभ्यमुनेर्विद्यारण्यस्य च वचननिचयं विचार्य, ' हन्त ! कश्चन करबदरकल्पमपि जीवपरयोर्भेदमपलपति, प्रलपति च वियदम्बुजविडम्बनधुरन्धरेऽपि तयोरभेदे तात्त्विकता ' मिति तर्कयन्ननयोर्जयपराजयौ तत्क्षणविरचितेन ' असिना तत्त्वमसिना परजीवप्रभेदिना । विद्यारण्यमहारण्यमक्षोभ्यमुनिरच्छिनत् ॥ ' इति पद्येन निरवद्येन विद्योतयामास ॥

वाणीमादाय सूरेस्तां क्षोणीपरिबृढप्रियाः ।
शिरसा क्लृप्तनतयस्तरसा स्वां पुरीं ययुः ॥ ५१ ॥

॥ ग ॥ 'अथ वसुधाबलजिदाचार्यसविधादायातैः विबुधैस्तैर्निवेदितं कथाहवजयापजयकर्णेजपं श्लोकमेकमा-

कर्ण्य जृम्भितहर्षः स्तम्भितविपक्षपक्षमक्षोभ्यमुनिं मध्येसभं भृशं प्रशशंस ॥

सभासदस्साधुवचोवितानैः
सहैव सारज्ञतमेन राज्ञा ।
वैदग्ध्यमाम्नायवतंससूरे-
रन्यादृशं तुष्टुवुरात्तहर्षाः ॥ ५२ ॥

॥ ग ॥ तदनु, कलशीतनयककुभो विभूषणभूतं कवेरकन्यापरिगतोपकण्ठमादिमं भगवदभिव्यक्तिस्थानमव-लोकयितुं काञ्चीनगरान्निगमाञ्चलगुरुर्निर्गत्य मार्गसन्निकृष्टेषु तेषु तेषु दिव्यदेशेषु धरित्रीजनपरित्राणकृते कृतावतरणं शरणागताघपरागझंझासमीरणमिन्दिरारमणमनपायभक्तिपुर-स्कारैर्नमस्कारैराकलितकर्णोत्सवैः स्तवैश्च प्रसादयन्, एकान्त-शीलविबुधजनमनोहरिणवशीकरणवागुरां देवनायकसेवना-पतदचलकन्यकाकमनविभूषणभुजगबृन्दतुन्दिलतापादकपत-ङ्गराजतरङ्गिणीपयोजवनपवनपरिमलितपरिसरां निरवधिक-निजतपोमहिमसमाकृष्टतत्तदभीष्टदेवतानिध्यानलब्धमनीषि-तमनीषिपरिबृढपापठ्यमाननानास्तुतिवचोवाचालीभवदभ्यर्ण-कनदौषधगिरीन्द्रदरीमहीन्द्रपुरीमयासीत् । मुमुक्षाविघात-वित्रासनकरे तत्राऽपि नगरे,

दधतं श्रियं सरसिजैकसखीं
दलयन्तमुद्भटजगत्तिमिरम् ।
उपतिष्ठते स्म हरिमद्भुतधी-
रुदयन्तमौषधगिरेर्निकटे ॥ ५३ ॥

अजातजनसंबाधे हरेरभिमतास्पदे ।
अहीन्द्रनगरे वस्तुमाकांक्षीद्वासरान्बहून् ॥ ५४ ॥

विहगवरसरित्कृतावगाहो
विबुधततिं प्रणमन्दिने दिनेऽसौ ।
न्यवसदतिसुखं फणीन्द्रपुर्यां
निगमकिरीटविचारनीतकालः ॥ ५५ ॥

आनने तुरगं देवमौषधाद्रितटान्तरे ।
आरराध स मन्त्राणामावृत्तिभिरनेकधा ॥ ५६ ॥

॥ ग ॥ स जातु जपसमयसाक्षात्कृतेन भगवता वागीशनाम्ना वासुदेवेन समादिष्टो हयवदनस्तव, देवनायकस्तुति, गोपालविंशति, महावीरगद्यादिकान् कानपि संस्कृताकारान्, अच्युतशतकप्रमुखानपरानपि प्राकृतरूपान्, अन्यानपि परमतभङ्ग, विरोधपरिहारप्रभृतीन् कलशभवभाषात्मकान् प्रबन्धनिचयान् विरचयांबभूव ॥

श्रीहयग्रीवाय नमः

प्राची संध्या काचिदन्तर्निशायाः प्रज्ञादृष्टेरञ्जनश्रीरपूर्वा ।
वक्त्री वेदान् भातु मे वाजिवक्त्रा वागीशाख्या वासुदेवस्य मूर्तिः ।।



श्रीलक्ष्मीहयवदनः

व्याख्यामुद्रां करसरसिजैः पुस्तकं शङ्खचक्रे
बिभ्रद्भिन्नस्फटिकरुचिरे पुण्डरीके निषण्णः ।
अम्लानश्रीरमृतविशदैरंशुभिः प्लावयन्मां
आविर्भूयादनघमहिमा मानसे वागधीशः ।।

(हयग्रीवस्तोत्रम्)

क्रीडन्तमन्तर्मुखहृद्वनान्ते
किटिं चिरं सुकृती दिदृक्षुः ।
मुदा जगाहेऽथ सहानुगः श्री-
मुष्णस्थलं मुक्तिलतालवालम् ॥ ५७ ॥

॥ ग ॥ पुरे च तत्र पुंखितहर्षपूरैः पौरैः परिवृतो निर्भरविसरदविद्यासरित्तरण्यां नित्यपुष्करिण्यां निर्वर्तित-नियमाभिषेको देशिकेन्द्रः सान्द्रतरफेनानुलेपनसम्पदमिव सर्वंसहासमुद्धरणक्षणविहितसागरावगाहसमधिगतां कीर्ति-विततिमिव, श्रीवत्सरुचितिमिरविघट्टनवाञ्छयोपस्थितां, मन्द-स्मितमरीचिकामिव वक्षोगतलक्ष्मीवदनविनिस्सृतां, शय्या-भुजगतनुच्छायामिव शयनसमयसंक्रान्तां, भक्तजनतप-स्समृद्धिमिव प्रसादपरिगृहीतां, अनिदंप्रथमफणितिमिवाल्प-श्रुतिभयादाश्लिष्यन्तीं, पुण्डरीकवनलक्ष्मीमिव कौस्तुभरवि-मवलोकयितुमुपागतां, कामपि कान्तिलहरीमुद्वहन्तम्, कुरुविन्दमणिमन्दिरान्तरावस्थिततया राजहंसमिव राजीववन-विहारिणम्, मृगाङ्कमिव मृडानीविटजटावलयनिलयं, शंख-मिव समुद्रविद्रुमलतावितानकुहरपरिपतितं, नक्षत्रमिव नव-कुंकुमारुणसायन्तनघनमध्यमध्यारूढं, अभ्रमुकमनमिव हाटकगिरितटमासेदिवांसं, अम्बुजलताविलोलमादिमं कोल-मालोकयाम्बभूव। अथ भक्त्या भगवन्तमनुभवतो निगमान्त-गुरोरन्तःसन्तोषसन्दोहेन चिन्ता तावदियमुदियाय ॥

'अद्राक्षं कमपि क्षमाभृतमहं त्रातात्मपक्षश्रियं
पद्मोल्लासकरः सितद्युतिरसौ दत्ते दयाकौमुदीम् ।
अग्रे मे समुदेति हन्त! सविता व्योमानपायं श्रितो
मन्ये कामपि गाहते परिणतिं मत्पुण्यपारम्परी' ॥ ५८ ॥

भूयो भूयो भवपथजुषां तापमुन्मूलयन्तीं
पायम्पायं जलरुहलताजीवितेशेन्दुदीप्तिम् ।
जीवं जीवो निगमशिखराचार्यनेत्राभिधानो
गाहङ्गाहं प्रमदजलधिं तन्तनीति स्म केलिम् ॥ ५९ ॥

सरोरुहलताचित्तसरोविशदवारिजम् ।
प्रणम्य देवं न्यवसत्पञ्चषांस्तत्र वासरान् ॥ ६० ॥

रञ्जितसज्जनचित्ते रङ्गस्थाने रमाक्षमाधीनम् ।
आद्यं पूरुषमक्ष्णोर्विषयीकर्तुं ययौ विशेषज्ञः ॥ ६१ ॥

॥ ग ॥ प्रस्थितस्य पथि तस्य गुरोरग्रसीमानमागताः कतिचन रङ्गनगरीजनाः विरचितप्रणामाः विवृतविनयाः, पत्रिकामेकां ददु, रभिदधुश्च, 'रामानुजसिद्धान्तसिन्धुराकेन्दो! श्रूयतामिदं श्रुतिधनलाभवता भवता ॥

प्रौढिं कामपि भावयन्भृशमनःस्तोमाहतैः पुस्तकैः
वादी कश्चन कृष्णमिश्र इति वाक्चातुर्यधुर्योऽधुना ।
मायातन्त्वपथाध्वनीनहृदयो मन्देतराहंकृति-
र्वादाटोपमनेकधा प्रथयितुं रङ्गस्थलीमाययौ ॥ ६२ ॥

सिद्धान्ते यतिभूभृता प्रकटिते सिद्धान्वयाः सज्जना-
स्तत्रत्याः कविसिंह ! तावकवचस्तद्दवनिर्वापकम् ।
मत्वा ते महनीययुक्तिविततेराह्वानपत्रं प्रियं
प्राहिण्वन् भवदागमात्फलवती वाञ्छाऽपि तेषामभूत् ' ॥

इत्थं रङ्गजनानां श्रुत्वा श्रुत्यन्तदेशिको वाचम् ।
मौलौ तदपि च पत्रं मान्यं विन्यस्य सानुगो मुमुदे ॥६४॥

अतिलंघ्य स पन्थानमथ त्रिचतुरैर्दिनैः ।
रम्यं रङ्गपुरोपान्तमसेवत सकौतुकः ॥ ६५ ॥

॥ ग ॥ प्रदेशे तत्र पयोविहरणदोहलावतीर्णचोल-वरवर्णिनीकुचगिरिगलितकुङ्कुमपङ्कमेदुरतया काममपि कनक-सरिदभिख्यानुगुणामभिख्यां प्रख्यापयन्तीं, प्रक्रीडितसित-पक्षपतगपक्षतिपालीहतितरलीकृतनालीकवनालीगलितमधू -लीनिर्झरजातोपचयस्रोतोभरप्रसूतोचितसारिणीशतसेकसंवर्धि-तानूपकेदाररसालजालोत्कीर्णतत्तादृशमुक्ताफलनिकरसिकतिल तटसीमतया यशःप्ररोहानिव यमुनासखीमहिमविजयविजृ-म्भितान् सकलजनदृशां सन्दर्शयन्तीं, निर्मलतरतीर्थनिर्मि-तावगाहतनुभृदघसंघात, मपहत, मन्तरा जटिलजलनीलिका-पटलकपटेन प्रकटयन्तीं, निजान्तरीपवसतिमासेदुषे सना-तनाय पुंसे पुष्पाञ्जलीन्, फेनकलापरूपान् वीचीकरेण

विकिरन्तीं, अमिततमालहरिततया पयोधरव्यूहेनेव पयोधि-
पूरान्तरशङ्कावहं पयोभरं पातुमवतीर्णेन तमःस्तोमेनेव
तत्तादृशकुवलयवनरेखानिशीथिनीं निषेवितुमुपागतेन विषम-
शरयशःकलशोदधिशीकरैर्वियोगिजनविलोचनजलजविभा -
वरीसुहृत्करैः कुसुमोत्करैरपि मानिनीजनमानरजनीबालातपैः
मन्मथज्वलनज्वालावलयैरिव किसलयैरपि भुवनविजयकृतो-
द्यममनसिजमहीपालकार्मुकमौर्वीटङ्कारशङ्काकर झङ्का रमुखरैः
विकचकुसुमविहितावस्थानतया नागेशयं नारायणं रङ्गभू-
रमण, मनुकुर्वद्भिः, रविरतकेलिभिरलिभिरपि कमपि कमनीय-
भावमुद्भावयता, सरभसपरिभ्रमवशविश्लथपुष्पलावीचिकुर -
भरमुदिरविलोकनमोदमानाभिः केकिनीभिरनुकलमारभ्य -
माणकेकाकोलाहलेन निर्जरपथनिर्यदर्यमघोटखुरपटघट्टनवि-
पाटितनालिकेरफलविनिस्सृतविष्वङ्मुखपयःपूरपूरितालवाल -
प्रतिफलितप्रसूननिचयतया तपनातपभयेन शरणागताभिरिव
ताराभिरुपास्यमानेन सावित्रीमन्त्रेणेव सकलद्विजपरिवर्तनो -
चितपदेन, कर्ममीमांसातन्त्रेणेव कन्दलितसुमनोगणामोद -
सहस्राधिकरणेन, वर्षात्ययेनेव व्यञ्जितासमशरविलासेन,
वासरान्तवारिदेनेव व्याकृतपाटलश्रिया, सरोरुहेणेव
समुल्लसितकेसरेण, लङ्काद्वीपेनेव लक्ष्यमाणपलाशकुलेन,
नरपतिसैन्येनेव नानाविधकदलिकोल्लासजुषा, पञ्चशरेणेव

प्रपञ्चितरसालबाणासनेन, तपःप्रवृत्तेनेव तरङ्गितजपेन, खण्डपरशुनेव खर्जूरनगाश्रयेण, काश्यपीमध्यमभागेनेव कनकशिखरिसनाथेन, व्यक्तिजातेनेव जात्याधारेण; व्यासेनेव शुकोदयहेतुना, कात्यायनीकर्णेनेव कालकण्ठसरसालापासक्तेन वलमानसुरभिलपवनेन वनेन विभूषितपरिसरां, रजनीकरमण्डलीमिव लक्ष्मणाऽन्वितां, कार्तिकेयशक्तिमिव क्रौञ्चभेदोज्ज्वलां, हरिहस्तयुगलीमिव सुदर्शनजलजालङ्कारां, आदिकाव्यफणितिमिव सुन्दरकाण्डोपशोभितां, पंक्तिकण्ठभवननिरुद्धसीतामिव पवनजातसमागमसूचितोदयां, नटीमिव रङ्गभुवमवतरन्ती, मभिसरणप्रवृत्तामप्यतिपवित्रां, सह्यभवामप्यसह्यभवां, चक्षुष्यामपि श्रुतिगम्या, मभङ्गुरगतिमपि सभङ्गसञ्चारां कवेरकन्यामालोकत स लोकगुरुः ॥

पयोरुहाणां प्रतिपद्य वीथीं
 परागजातं परितः किरन्तः ।
मरुद्वृधावीचिमरुत्किशोराः
 मार्गश्रमं जह्रुरमुष्य सूरेः ॥ ६६ ॥

असेवताऽसौ कनकस्रवन्ती-
 कल्लोलजान्कानपि गन्धवाहान् ।
सञ्चारदेशे सनकादिदूरं
 निश्रेयसं ये नियतं दिशन्ति ॥ ६७ ॥

अवलोक्य तमागतं कवीन्द्रं
कविसत्कारविधौ धृतव्रता सा ।
कलहंसरवैः कवेरकन्या
सरसैः स्वागतमन्वयुंक्त किन्नु ॥ ६८ ॥

अलङ्कृतं हल्लकदीपजालै-
रावर्तपात्रं पुरतो दधाना ।
नीराजनं सा निगमान्तसूरेः
निष्पादयामास नदीमतल्ली ॥ ६९ ॥

विदिद्युते सा तटिनी तदानीं
विकस्वराम्भोजविलोभनीया ।
आचार्यसन्दर्शनसम्भवेन
हर्षेण विस्तारितलोचनेव ॥ ७० ॥

॥ ग ॥ स गुरुरुत्सङ्गशय्यानिद्राणनारायणामुत्तुङ्गरङ्गपुरसौधशतप्रतिबिम्बदम्भेन महीयसो महीध्रानन्तराबिभ्रतीं, विहरमाणचोलविलासिनीवक्षोजमन्दरमथनेन सुरभिममृतभरं सूचयन्ती, मापगामिमामजहत्पतिव्रतौचितीमजीगणत् ॥

तस्मिन् गुरौ तटमुपेयुषि नैजवीची-
गर्वापनोदनगभीरवचःप्रवाहे ।

व्रीलादिव द्रुतमधावदनल्पफेन-
चेलावकुण्ठिततनुः कनकस्रवन्ती ॥ ७१ ॥

कवेरस्य तदाकारि कवेरस्य तनूजया ।
सुधामधुरसादीनां वृथा मधुरिमेति धीः ॥ ७२ ॥

कविवादिहरिः कवेरजायां
विमलान्तःकरणैस्समं विनीतैः ।
विहितस्नपनो विवेश रङ्गं
नगरं नाकविलङ्घिसौधशृङ्गम् ॥ ७३ ॥

विलुलोके विशेषेण विश्वविख्यातवैभवाम् ।
श्रीरङ्गनगरीं रम्यां श्रीमान्वेदान्तदेशिकः ॥ ७४ ॥

सरोजयोनेः सदनेऽपि तस्मिन्
साकेतदेशेऽपि समग्रभूम्नि ।
अलब्धपूर्वेण रसेन यस्या-
मास्ते पुमानब्धिसुतासहायः ॥ ७५ ॥

हरिन्मणीनामभितो गुरूणा-
मालोकभूम्ना हरितत्त्वभङ्गीम् ।
अभ्येत्य मायामवधूय दूरे
मुक्तोपभोग्यां श्रियमश्नुते या ॥ ७६ ॥

मयूखजालैर्मणिमन्दिराणां
पराकृते यत्र तमःप्रपञ्चे ।

दिनान्तदीपा गृहदेवतानां
सम्पाद्य हर्षं सफला भवन्ति ॥ ७७ ॥

सुखं दिशन्ती सुमनोजनाना-
मुदारनेत्रोपचयं दधाना ।
वज्रोपपन्ना वसुभिर्निषेव्या
वलद्विषो मूर्तिरिवैधते या ॥ ७८ ॥

वादाहवे यत्र वदावदानां
वाचां विचित्रां विततिं विलोक्य ।
वाग्देवताऽपि त्रपयेव तान्ता
वासं विधत्ते बत काननेषु ॥ ७९ ॥

मनीषिणां मञ्जुलसूक्तिधारा-
माधुर्यचौर्याय मधुप्रवाहाः ।
सदा विजृम्भत्कनकस्रवन्ती-
व्याजेन यस्याः सविधे वलन्ते ॥ ८० ॥

यज्ञोत्सवे यत्र धरासुराणां
दिव्यानि कर्माणि दिदृक्षुरिन्द्रः ।
सहस्रमक्ष्णां समुपाददानः
सर्वैः सुरेन्द्रैः सह सन्निधत्ते ॥ ८१ ॥

श्रीमान् गिरीशो भगवान् विधाता
श्रीदः शुचिः शक्तिधरः कृतान्तः ।

प्रभाकरो हन्त ! सतां सहायो
यत्र द्विजौघो बहुदेवतात्मा ॥ ८२ ॥

विभावनीयस्सुमनोवितानैः
विख्यातिमान् शाखिगणो विचित्रम् ।
पुन्नागभावं समुपेत्य यस्या-
मशोकतां यत्पुनरभ्युपैति ॥ ८३ ॥

अदभ्ररत्नांशुभरैर्जटावान्
अभ्रापगाघ्रातशिरःप्रदेशः ।
सौधःसुधाचारुतरस्वमूर्ति-
र्व्यनक्ति यस्यां विधुशेखरत्वम् ॥ ८४ ॥

सौधेन्द्रनीलद्युतिसैंहिकेये
नभोमणिं गृह्णति नाकसीम्नि ।
तन्वन्ति यस्यां तरवो महान्तो
वियद्धुनीवीचिविगाहनानि ॥ ८५ ॥

सौधाग्रभाजां यदणूदरीणां
सङ्गीतकालीनमृदङ्गनादम् ।
विशङ्क्य मेघस्तनितं विधत्ते
नाट्यं नवं नन्दनकेलिकेकी ॥ ८६ ॥

वियत्तरूणां विटपेषु यस्यां
विसृत्वरीं मौक्तिकहर्म्यदीप्तिम् ।

पुरन्दरान्तःपुरपक्ष्मलाक्ष्यः
पुनः पुनः पुष्पधिया स्पृशन्ति ॥ ८७ ॥

सौधो यदीयस्समहेन्द्रनीलो
जैवातृके जालपथं प्रपन्ने ।
हैयङ्गवीनं वदने वहन्तं
धुर्यं यदूनां समयन् समिन्धे ॥ ८८ ॥

सौम्यत्वमक्ष्णोरधरेऽरुणत्वं
कुचे गुरुत्वं गमनेषु मान्द्यम् ।
कलानिधित्वं कविता च वक्त्रे
रसोदितत्वं गिरि यद्वधूनाम् ॥ ८९ ॥

यत्सुभ्रुवामुज्जयिनी तनुश्रीः
मायामयं मध्यमदो विभूषा ।
काञ्ची विशाला दृगुरोजकुम्भो
महोदयात्मा मधुरा च सूक्तिः ॥ ९० ॥

यत्राङ्गनानेत्रविलासचोरौ
नीलाब्जमीनौ वनसीम्नि यातौ ।
आद्यं बहिर्व्यक्तमिनेन दून-
मन्यत्तयोरन्तरितं न खिन्नम् ॥ ९१ ॥

पयोधरौ यत्प्रमदाजनानां
चक्राकृती चन्दनचन्द्रिकायाम् ।

अव्याहतायामपि हन्त ! नित्य-
मन्योन्यसंश्लेषरसं भजेते ॥ ९२ ॥

कल्लोलकेलीपरकातराक्षी
कदम्बदम्भेन कवेरकन्या ।
सन्दर्शयन्ती कमलासहस्रं
यत्रातिशेते पतिमम्बुराशिम् ॥ ९३ ॥

अर्कांविपादाहतिधूतचूत-
फलौघनिर्यद्रसपङ्किलासु ।
वीथीषु विन्यस्तमणीशिलासु
गतागतं यत्र जना भजन्ते ॥ ९४ ॥

निरीक्ष्य तां रङ्गपुरीं निस्समाभ्यधिकश्रियम् ।
आम्नायमकुटीवाचामाचार्यो मुमुदेतराम् ॥ ९५ ॥

इति

# वेदान्ताचार्यविजये चम्पूप्रबन्धे
# पञ्चमः स्तबकः



कल्पद्रुः कविवादिसिंहविदुषः प्रज्ञासुधावारिधेः
जातः कश्चन कल्पितार्थविततिश्चम्पूप्रबन्धात्मना ।
प्राचीनोक्तिवतंसदेशिककथामाध्वीं भजत्पञ्चम-
स्तस्यासौ स्तबकः करोतु सुमनःकर्णावतंसश्रियम् ॥

अथ

# वेदान्ताचार्यविजये चम्पूप्रबन्धे

## षष्ठः स्तबकः



आकर्ण्य रङ्गनगरे निकरो बुधानां
आचार्यमागतममुं सह शिष्यसङ्घैः ।
प्रत्युज्जगाम परितोषवशात्प्रभायाः
कान्तं यथा कमलकाननकान्तिपूरः ॥ १ ॥

यतिपुरन्दरवाक्पथजाङ्घिकान्
कृतिजनान्कुशलं परिपृच्छतः ।
उदितभक्तिरुपान्तगतान् स ता-
नुपचचार यथाविधि देशिकः ॥ २ ॥

अथाभ्रकूलङ्कषगोपुराञ्चल-
स्थलस्खलत्सारसबन्धुसैन्धवम् ।
दिवापि मुक्ताघनसालजालक-
द्युतिच्छटादर्शितचन्द्रिकोदयम् ॥ ३ ॥

निबद्धनानासुमसौरभादर-
भ्रमन्मिलिन्दस्वनसान्द्रमण्डपम् ।

विचित्रकेलीशुकशारिकावचो
विशेषविश्राणितकर्णकौतुकम् ॥ ४ ॥

निबद्धधारागृहकायमानभू-
निवासमाद्यन्मृगबर्हिशाबकम् ।
प्रदर्शिताम्भोरुहसम्भवाखिल-
प्रपञ्चचित्रावलिचारुभित्तिकम् ॥ ५ ॥

नतस्मरद्वेषणशेखरच्छवि-
द्रुतक्षपाकाम्बुकरत्नकुट्टिमम् ।
हरिन्मणिस्तम्भघनेक्षणक्षण-
त्रसत्सपर्यापरविश्वसृड्रथम् ॥ ६ ॥

प्रदक्षिणैकोत्सुकपाकवैरिदृक्-
परम्परानन्दजलौघपङ्किलम् ।
अशिश्रियद्रङ्गधुरीणमन्दिरं
सशिष्ययूथः कविबादिकेसरी ॥ ७ ॥

॥ ग ॥ भव्ये तत्र भगवतो निकेतने प्राचां आचाररहस्यविदामाचार्योऽयम्,

अनपायदयोल्लासामनभिज्ञातनिग्रहाम् ।
प्रेयसीं रङ्गनाथस्य प्रणन्तुं प्रथमं ययौ ॥ ८ ॥

वलद्विषद्वारिरुहासनाकर-
प्रकीर्णसन्तानवितीर्णसौरभम् ।
प्रदीपपालीपरिपालनत्वरा-
परिभ्रमत्पावकपक्ष्मलेक्षणम् ॥ ९ ॥

सवेगपाशायुधसारसेक्षणा-
शयाम्बुजाकीर्णहिमाम्बुशीतलम् ।
समीपसंमार्जनकायकल्पना-
समग्रसन्तोषमरुत्पुरन्ध्रिकम् ॥ १० ॥

विरिञ्चजायाकरपल्लवोल्लस-
द्विपञ्चिकागीतसुधासमञ्चितम् ।
अखर्वभक्त्यङ्कुरसर्वमङ्गला-
चमत्कृताभङ्गुररङ्गवल्लिकम् ॥ ११ ॥

विनीतपौलस्त्यविलासिनीमणी-
विसार्यमाणागरुधूपवासितम् ।
कृतान्तकान्ताकरवेत्रधूनन-
व्यवस्थिताशेषसुरासुराङ्गनम् ॥ १२ ॥

अजस्रलास्योल्लसदप्सरोगण-
प्रकीर्णभूषामणिबृन्ददन्तुरम् ।
निकेतनं नीरधिकन्यकामणे-
रविन्दताम्नायकिरीटदेशिकः ॥ १३ ॥

॥ ग ॥ मन्दिरस्य तस्य मध्यमभागे,

वितथीकृतविद्रुमश्रिया पदपङ्केरुहकान्तिरेखया ।
नतदेववधूजनालके नवसिन्दूरपरागवर्षिणीम् ॥ १४ ॥

दुरितानलदग्धचेतनान् द्रुतमुज्जीवयितुं दयावशात् ।
पदपद्मनखप्रभांकुरैः जनयन्तीमिव जाह्नवीं नवाम् ॥१५॥

प्रायः पयोधरगिरौ भजता विहारं
पाथोजलोचनमनोहरिणेन मुक्ताम् ।
रोमन्थफेनकणसन्ततिमुद्वहन्तीं
मल्लीसरप्रतिममौक्तिकहारदम्भात् ॥ १६ ॥

मधुजित्कटाक्षमथिते मुहुर्मुहु-
र्दधनि स्मितद्युतिपरम्परानिभे ।
नवनीतविभ्रमकरेण नासिका-
मणिना विशुद्धवृणिना विभूषिताम् ॥१७॥

करुणापरिरम्भशीतलान्
कमलाडम्बरपश्यतोहरान् ।
नतवाञ्छितनाकभूरुहान्
ददतीं दिक्षु कटाक्षसञ्चयान् ॥ १८ ॥

अहरन्ततमःस्तोममजहज्ज्योतिरिङ्गणम् ।
कलयन्तीमपमदं कचैर्गर्भितचम्पकैः ॥ १९ ॥

सनातनवचश्चूडासरसीचक्रवाकिकाम् ।
शौरिचित्तपयोराशिचारुविद्रुमवल्लिकाम् ॥ २० ॥

सकृदञ्जलिपरतन्त्रां
सरसिजनेत्रस्य सम्पदं दिव्याम् ।
अभिवन्द्य पद्मवासां
अभजत रङ्गेन्द्रसविधमाचार्यः ॥ २१ ॥

दलदिन्द्रनीलगलदंशुधोरणी-
निरपायगर्वभरपाटनच्युति ।
भुजगे शयानमजगेहदैवतं
स ननाम योगिजननापहं महः ॥ २२ ॥

॥ ग ॥ स गुरुरम्भोदडिम्भमिव तुषारशैलशिखरे, लोलम्बमिव पुण्डरीककानने, मरतकमिव मौक्तिकहारे, चिह्नमिव चन्द्रबिम्बे, नीलोत्पलमिव निर्जरसरित्प्रवाहे, मृगमदमिव मलयजपङ्के, फणिपर्यङ्के कृतावस्थानं, सनकादिहृदयसरसिजलोलम्बं, सनातनवचसामलम्ब, मभंगुर-करुणासनाथं रङ्गनाथमवनम्य हर्षपरवशो भगवद्ध्यान-सोपानादिकं स्तुतिजातमभिजातपदाभ्याधिकमभ्यधत्त ॥

विचित्रमेतस्य सरस्वती सा
विश्वप्रियं वृत्तमुपागताऽपि ।

श्रीरङ्गनाथपरब्रह्मणे नमः



श्रीरङ्गनाथः (उत्सवमूर्तिः)

अन्तर्ज्योतिः किमपि यमिनामञ्जनं योगदृष्टेः
चिन्तारत्नं सुलभमिह नः सिद्धिमोक्षानुरूपम् ।
दीनानाथव्यसनशमनं दैवतं दैवतानां
दिव्यं चक्षुः श्रुतिपरिषदां दृश्यते रङ्गमध्ये ।।

(भगवद्ध्यानसोपानम्)

परास्तशङ्का पटुभिर्विलासैः
परं पुमांसं प्रमदं निनाय ॥ २३ ॥

मालिकां स विबुधेन्धुराददे
माधवस्य मकुटादुपाहृताम् ।
तन्वतीं वरणदामशेमुषीं
तत्कृपातरललोचनामणेः ॥ २४ ॥

॥ ग ॥ अथ फलितमनोरथमात्मानं प्रतिपद्यमानः प्रेमपरवशैः पौरविबुधजनैरनुगम्यमानो वेङ्कटनाथगुरुर्वासगृहमुपासदत् ॥

अथ वेदशिरस्सूरिमवदन् रङ्गवासिनः ।
कृताभिलाषाः कृतिनः कृष्णमिश्रनिराकृतौ ॥२५॥

'अस्माकममितैः पुण्यैरवतीर्णोऽसि भूतले ।
पारे गिरां प्रभावस्ते पारीन्द्र कविवादिनाम् ॥२६॥

विततं कृष्णमिश्रस्य विद्यादर्पं व्यपाकुरु ।
अशेषहरिदाश्लिष्टं जुषेथास्त्वं ततो यशः ॥२७॥

एको भवानलङ्कारो यतीश्वरमतश्रियः ।
अलङ्करोति किं चन्द्रादन्यो हरशिरःस्थलीम् ॥२८॥

चतुर्णामपि वेदानां चारुताऽकारि ते गिरा ।
वचोदेव्या मधुरया वक्त्राणामिव वेधसः' ॥२९॥

वादिपञ्चाननाचार्यो वाचं तेषां वतंसयन् ।
वादिना कृष्णमिश्रेण वादं तनितुमैहत ॥ ३० ॥

॥ ग ॥ स वेदारविन्दमधुकरो गुरुः वादाहवचातुर्यविलुलोकयिषया विविधाभ्यो दिग्भ्यः समागतैः विपश्चिदपश्चिमैरविरलमाबद्धमण्डलैरधिष्ठितपूर्वं भगवतो रङ्गनृपतेरास्थानमण्डपमधिगत्य प्रतिकथकेन तेन सह प्राचीनफणितौ पतञ्जलितन्त्रे कणचरणकथायां कापिलकल्पनायां कौमारिलवचसि गौरवसारस्वते शाङ्करग्रन्थे रामानुजयोगिराद्धान्ते सांख्यादिष्वपरेषु विद्याविशेषेषु वासरानष्टादश दृष्टान्तरङ्गः प्रसङ्गं तरङ्गयामास ॥

प्रत्यहं प्रतिभटोक्तिचातुरी-
मत्यशेत निगमान्तदेशिकः ।
वार्षिके जलधरे विजृम्भिते
वर्धते किमु निदाघनैपुणी ॥ ३१ ॥

अनितरबुधलभ्यानात्महृत्पद्मदीव्य-
त्तुरगवदनहेषासंशयस्थूललक्षान् ।
विकिरति वचनौघान् वेदचूडार्यवर्ये
विगतविजयतृष्णः कृष्णमिश्रो बभूव ॥३२॥

पराभूते तस्मिन्कविकथकसिंहोक्तिनिवहैः
निरातङ्का रेजे यतिपतिमतश्रीरतितराम् ।
यथा द्यौरम्भोदे शममुपगते शारददिनैः
यथा वा जम्बाले विरतिजुषि तैरेव धरणी ॥२३॥

॥ ग ॥ तदा किल तरङ्गितविस्मयाः सभासदः सर्वेऽपि,

विजयश्रीपरिणयं वेङ्कटेशे वितन्वति ।
प्रशंसावचनव्याजात् प्रायो मन्त्रानजूघुषन् ॥ ३४ ॥

प्राक्तनोक्तिशिखाचार्यं प्रौढैर्वाचां कदम्बकैः ।
प्रास्तौषीत्कृष्णमिश्रोऽपि प्रादुर्विनयमानसः ॥ ३५ ॥

॥ ग ॥ भगवानपि रङ्गरसिको निगमशिखरवचसामर्थानतिविततगभीरानशेषानपि विशेषादनघपदविन्यास-पूर्वकमुपन्यस्तवते तस्मै कृतिकुलतिलकाय परितोषपरतन्त्र-स्वान्तः स्वान्तरङ्गजनमुखेन पारितोषिकतया 'वेदान्ताचार्य' पदमन्येन केनचिदलब्धपूर्वमर्पयाम्बभूव । स्वयमपि रङ्ग-सर्वंसहासहचरसहधर्मचारिणी साक्षात्कृतसरस्वतीविलसित-सर्वस्वस्य गुरोः 'सर्वतन्त्रस्वतन्त्र' संज्ञां 'विमतविद्वदभिमान-रक्षःशिक्षामन्त्रकल्पामुत्पादयामास ॥

उल्ललास स नामभ्यामुचिताभ्यां गुरूत्तमः ।
शार्ङ्गीव शंखचक्राभ्यां दन्ताभ्यामिव कुञ्जरः ॥३६॥

सकलविबुधपूज्यां वादसाम्राज्यलक्ष्मी-
मितरजनदुरापामीयुषस्तस्य सूरेः ।
दनुजमथनलक्ष्मीदत्तमाख्यायुगं तत्
चमदकुरुत शङ्के चामरद्वन्द्वशोभाम् ॥ ३७ ॥

कथकविजयलक्ष्म्याः कर्णताटङ्कयुग्मं
रथपदमिथुनं वाग्व्याजगङ्गाविहारि ।
स्तनयुगमनुरूपं कीर्तिधारातरुण्याः
युगलमगणि नाम्नोरस्य विद्यापयोधेः ॥ ३८ ॥

॥ ग ॥ इत्थमुद्धततत्तत्प्रत्यर्थिमदकदर्थनेन रङ्गे-सतामन्तरङ्गे किमपि कुतूहलमुन्मीलयन्, श्रुतिवतंसगुरुर्यतिपुरन्दरमतमर्माभिलापकर्माभिलाषुकः शङ्करमुखकुदृष्टिविप्रलापविद्वेषिणीं शतदूषणीं, अभिज्ञमतियुवतितारावलीमधिकरणसारावलीं, तथागतादिमतविदारणतर्कसाधककलापं तत्त्वमुक्ताकलापं, समुद्बोधितकथकसार्थबुद्धिं सर्वार्थसिद्धिं, निराकृतनिरीश्वरवादाशंसां सेश्वरमीमांसां, प्रतिभटरचितप्रबोधचन्द्रोदयचातुरीपराकरणधुरीणं प्रालेयकरमिव परिस्फुरदङ्कं सङ्कल्पसूर्योदयं नाम नाटकं, विरिञ्चमिव विचित्र-

सर्गं वीणाविशेषमिव व्यञ्जितध्वनिगुणं यादवाभ्युदयं नाम काव्यरत्नं, अपरानपि तात्पर्यचन्द्रिका, सच्चरित्ररक्षा, निक्षेपरक्षा, रहस्यरक्षा, गीतार्थसंग्रहरक्षा, पाञ्चरात्ररक्षा, श्रीस्तव, भूस्तव, नीलास्तव, यतिराजसप्तति, न्यासतिलक, न्यासविंशति, वादित्रयखण्डन, तत्त्वत्रयचुलक, रहस्यत्रय-चुलक, तत्त्वपदवी, रहस्यपदवी, तत्त्वनवनीत, रहस्यनवनीत, तत्वमातृका, रहस्यमातृका, तत्त्वरत्नावली, रहस्यरत्नावलीहृद-याभयप्रदानसार, प्रधानशतकाञ्जलिवैभव, परमपदसोपानो-पकारसंग्रह, रहस्यशिखामणि, मुनिवाहनभोगाहारनियति, हंससन्देश, मीमांसापादुका, तत्त्वटीकाभिख्यान् अन्यानपि पारमैकान्त्यशालिनो भक्त्या तत्त्वहितपुमर्थधियं प्रार्थयमानस्य कस्यचिद्दवीयसोऽपि दयनीयस्य महीपतेः समीहितवितरण-क्षमान्, तत्त्वसन्देश, रहस्यसन्देश, सुभाषितनीवीप्रमुखान् प्रबन्धान् निबबन्ध । एवमाबद्धाभिरपरिमिताभिः कृतिभि-रापादितमनितरसाधारणमस्य गुरोरतिशय, माशुकविता-विभवादपाचिकीर्षुः कश्चन कविरभ्याशमेत्य गिरमिमामपगत-शङ्कमङ्कुरयामास ॥

‘यदि ते कविवादिसिंहता
श्रुतिचूडागुरुधुर्य ! विद्यते ।

परिकल्पय पद्यधोरणी-
मनवद्यामधुना मया समम्' ॥ ३९ ॥

आचार्योऽपि,

उक्तिमस्य प्रतिकवेरुद्दाममदमेदुराम् ।
प्रकल्प्य कर्णपथगां प्रतिवाचं व्यश्रिश्रणत् ॥ ४० ॥

॥ ग ॥ 'अये भद्र कवीन्द्र ! भवतु भवदभिहितम् । इदमपि मयाऽभिधीयमानमाकर्णय । भगवतो रङ्गवसुन्धरा-रमणस्य प्रणिपतनसमये समवेतानां विख्यातानां विदुषां परिषदि प्रथमतः प्रतिश्रवमाबध्य पश्चाद्वचनचातुरीं प्रपञ्च-यिष्यावः । एवञ्चेदावयोराशुकवितातरतमता जगता विदिता भविता' ॥

वाचमित्थं समुदितां वादिसिंहमुखाम्बुजात् ।
प्रत्यग्रहीत्स्वयमपि प्रत्यर्थी स कवीश्वरः ॥ ४१ ॥

॥ ग ॥ एतस्मिन्नन्तरे परिफुल्लमल्लिकाप्रसवसौर-भाकर्षिणं प्रकटितजडिमानं पवमानं कमपि पुरस्कुर्वन्, सुरभिलशरसमरविलम्बासहकातराक्षीकटाक्षकलम्बाभिपाता-दिव लोहितायमानमम्बरमणिबिम्बमपराम्बुधितरङ्गभुजङ्गशिरो-रत्नमाकलयन्, अर्णोरुहवैवर्ण्यकर्णेजपः, कोककुलकुशल-परिपन्थी कोऽपि समयः समजायत ॥ तदा खलु,

समयचक्रसमीरविधूननात्
सपदि सत्पथमध्यपरिच्युतम् ।
तरणिमण्डलमस्तशिलाहतं
शिथिलरश्मि पपात पयोनिधौ ॥ ४२ ॥

पयोजिनीं प्राप्तरजोऽनुषङ्गां
व्यक्तीकृताशावितति: करेण ।
आश्लिष्य भास्वाननुतापयुक्तो
ममज्ज मध्ये चरमाम्बुराशेः ॥ ४३ ॥

अतुषारमरीचिरातनो-
दपराम्बोधितरङ्गसङ्गतः ।
मधुमाथितनौ कृतस्मितेः
मणिराजस्य मनोरमां रुचम् ॥ ४४ ॥

॥ ग ॥ क्रमेण नटनसम्भ्रमारम्भिणो नगराजतनूजाजीवितेश्वरस्य निटिललोचनज्वालेव निष्पतन्ती, जटारुचिपटलीव जृम्भमाणा, विभूषणफणिफणारत्नद्युतिलहरीव विसृत्वरी, कनककुञ्चिकेव कैरवदलकवाटविघटनानुगुणा, मणिशलाकेव महनीयतारादीपदीपनोचिता, पद्मरागलतिकेव प्राचेतसहरिद्वरारोहावदनार्हा, प्रत्यग्रसिन्दूररेखेव पश्चिमगिरिकुम्भिकुम्भस्थलस्य, अरुणध्वजपटलीव वरुणनगर-

सौधस्य, सौगन्धिकवनीव सिद्धपथसिन्धोः सन्ध्या समलक्ष्यत । तदनु दानलहरीभर इव दर्पकद्विरदस्य, मषीचय इव सन्ध्यामरीचिदीपिकायाः, हरिणमदानुलेप इव त्रिभावरीविलासिन्याः, कर्णोत्पलकोरक इव ककुभां, राघव इव रञ्जितकौशिकः, परिणतगज इव पांसुलान्तरदः, सांयुगीननृपतिरिव सर्वारिभयङ्करः, प्रदोषानुरक्तोऽपि पुण्यजनपूज्यवृत्तिस्तिमिरनिकरो भुवनकुहरमाववार ॥

अविरलमहरन्तरागदम्भा-
द्गगनतरोरुदितानि पल्लवानि ।
ग्रसितुमुपगतं कुहूमुखानां
कुलमिव सन्तमसं व्यलोकि लोकैः ॥ ४५ ॥

रुचां पत्यौ रामे रचितमृगतृष्णाविलसिते
तिरोभावं याते क्वचन वनराशौ गतिवशात् ।
तमोरूपो नक्तंचरपतिरुपागत्य तरसा
जगद्वन्द्यां सन्ध्यां जनकतनयां हन्त जगृहे ॥ ४६ ॥

॥ ग ॥ निर्जरपथोऽपि नीरधिरिव समुल्लासितमीनः, नैघण्टुकवचःकलाप इव काव्यालोकोपयोगी, लीलावनदेश इव लक्ष्यमाणचित्रशिखण्डिजातः, वसुदेव इव रोहिणीपरिष्वङ्गरमणीयः, सुरभिसमय इव सूचितमन्दरस्पर्शनः,

सुभाषितश्लोक इव श्रवणालङ्कारः, बलदेव इव रेवत्याश्लेषोदयरञ्जितः, सन्तमसमलिनोऽपि सन्दर्शितलोहिताङ्गः, ऊरीकृतखद्योतोऽपि दूरीकृतखद्योतो व्यद्योतत ॥

सन्ध्याकुंकुमपङ्कसङ्गललितां खद्योतसौगन्धिक-
व्रातोपेततमिस्रचारुचिकुरां स्फीतासिताब्जेक्षणाम् ।
ताराभातपनीयलेपविधिना देदीप्यमानाम्बरां
श्यामां शीतरुचिः प्रसारितकरो रागाञ्चितः सस्वजे ॥४७॥

वियत्क्षेत्रे विष्वक् तिमिरभरजम्बालभरिते
प्ररूढायास्ताराकपटकलमांकूरवितते: ।
जगद्दृष्ट्या दोषः सपदि समुदञ्चेदिति भया-
दनेहा तन्मध्ये व्रिधुधवलकुम्भं व्यतनुत ॥४८॥

वियति मंक्षु विसार्य महोदधौ
विपुलदीधितिजालमितस्ततः ।
अपजहार तमःशफरव्रजा-
नसितवारिजबान्धवधीवरः ॥ ४९ ॥

॥ ग ॥ इत्थं प्रवृत्तवति यामवतीमुखे, प्राक्तनोक्तिशिरसामाचार्यः सान्ध्यं कर्म निर्माय प्रतिस्पर्धिना तेन कविना सममुदग्रज्वालाचूडालदीपजालनीरन्ध्रतया विष्णुपदतां व्यक्तीकर्तुमभिनवानिव तारानिवहानाबिभ्राण, मा-

कर्ण्यमानवीणावेणुमृदङ्गशंखरवतरङ्गितं रङ्गराजमन्दिरं अविन्दत। तत्र, भगवद्भिवन्दनसमये सङ्घीभूताः संख्यावदग्रेसराः, त्रयीशिखरदेशिकस्य तस्य च प्रतिभटकवेस्तात्पर्यं परिज्ञाय, तौ कविमूर्धन्यौ न्ययूयुजन् ॥

'विभावर्यामस्यां विभुचरणरक्षाविषयकं
सहस्रं पद्यानां सपदि युवयो र्यो वितनुते।
कवेस्तस्यैव स्यात्कविकथकसिंहत्वबिरुदं
निदेशोऽयं शौरेर्निरवधिमहिम्नो विजयते' ॥ ५० ॥

इत्थमादिशत्सु सत्सु,

'करिष्यामि तथै' वेति कविः प्रतिभटो वदन्।
निरगादाग्रहस्रोतो नीयमान इवाग्रतः ॥ ५१ ॥

॥ ग ॥ स निगममस्तकगुरुरपि प्रस्तावितविनयविस्तारः सभास्ताराणां पुरस्तात् 'अकम्पनीयभगवदनुकम्पानुगृहीतस्य मे रङ्गक्ष्मापतिपदरक्षिणीविषयपद्यसहस्रविधाने, सौदामिनीसनाथस्य बलाहकस्य वर्ष इव, चन्द्रिकासान्द्रस्य चन्द्रस्य जगत्परितोषण इव, बाह्यकरणसचिवस्य मनसो बहिर्विषयानुभवोत्पाद इव व्याप्तिविशिष्टस्य पक्षधर्मताज्ञानस्य अनुमितिजनन इव, अवान्तरवाक्यार्थधीपरिरब्धस्य पञ्चावयवमहावाक्यार्थज्ञानस्य परामर्शसाधन इव सामर्थ्यमुन्निद्रमुद्भविष्यती' ति सप्रतिज्ञं निगद्य सदनमासाद्य, तस्या-

मेव शर्वर्यां सहस्रेण करैः समेतं सवितृमण्डलमहर्मुखसमय इव, सहस्रेण दलैः करम्बितं कमलं कासार इव, सहस्रेण पद्यैः प्रसाधितं रङ्गधुरीणचरणावनीस्तोत्रमुद्दामरसमुत्पादयामास ॥ तदनु,

प्राचीनोक्तिशिरःसूरेः प्रतिज्ञा महती द्रुतम् ।
प्रत्यपद्यत पर्याप्तिं शर्वरी तु शनैः शनैः ॥ ५२ ॥

'मान्या माधवपादुकास्तुतिरसौ मद्गर्वसर्वङ्कषां
कीर्तिं कामपि कल्पयिष्यति गुरोराशान्तरव्यापिनीम्'।
इत्थं भीतिभरेण पश्चिमगिरेर्मध्यस्थलीमभ्यगात्
काले तत्र कुमुद्वतीपरिबृढो गूढो बुभूषुः किल ॥ ५३ ॥

हरिचन्दनचित्रकश्रियं
हरिदश्वो हरिदिग्वधूमुखे ।
प्रथयन्प्रथमक्ष्माभृतः
प्रतिपेदे शिखराञ्चलस्थलम् ॥ ५४ ॥

पूर्वापरक्ष्माधरशृङ्गभाजौ
पद्मोत्पलेशौ रजनीविरामे ।
विदिद्युताते वियदच्युतेन
रथाङ्गशंखाविव धार्यमाणौ ॥ ५५ ॥

द्विजराजगोकुलविरोधकरो
जलजातसात्कृतवसुप्रकरः ।

अतिवेलरागभरितस्तपनः
कथमारुरोह बत विष्णुपदम् ॥ ५६ ॥

विदलत्सरसीरुहाटवी-
विगलत्सौरभसारमेदुरः ।
शिशिरो हिमशीकरैर्दिशां
कुहरे कोऽपि चचार मारुतः ॥ ५७ ॥

॥ ग ॥ विभाते तत्र विश्वामित्रकुलविशेषको देशिको विधिवदाचरितसांध्यकर्मविशेषोऽयमशेषैरन्तेवासिभिः सह देवस्य रङ्गेशस्य दिव्यामास्थानीमवगाह्य विमत-परिषदहन्तालतालवित्रं विश्वम्भरचरणावनीस्तोत्रं विदुषां विशृंखलवाचां प्राचीकशत् । तदा पुनरनवीनवचनशिखर-गुरोरन्यादृशीं सूक्तिसुधाधारां स्वैरमास्वादयन्तः सन्तस्ता-वन्तोऽप्येवं तुष्टुवुः ॥

'स ब्रह्मा निरपायसूक्तिलहरीवाचालवक्त्रावलिः
सा वाचामधिदेवता स च पुमान्पापठ्यमानः श्रुतौ ।
एते तावकहृद्यपद्यवितते: स्तोत्राय चित्राकृतेः
कल्पेरन्नितरो मितम्पचजनः कल्पेत तस्मै कथम् ॥५८॥

अद्भुतैस्तव वाक्पूरैरापगा सा दिवौकसाम् ।
विजिता व्रीलया विद्वन् विषादं भजते सदा ॥५९॥

तावकेन यशोभूम्ना ताराधीशः पराकृतः ।
ततः शोकातिरेकेण शान्ताभिख्यः स जायते ॥६०॥

पराकृततमोभराः प्रतिकवेरहन्ताहराः
मरन्दरससोदरा महितयुक्तिरत्नाकराः ।
त्रय्यीशिखरकिङ्कराश्त्रिदशवाहिनीजित्वराः
जयन्ति गुणबन्धुरा जगति ते गिरामंकुराः ॥ ६१ ॥

शमदमार्जवधैर्यदयाक्षमा-
विनयमार्दवसौम्यमुखाः शुभाः ।
गुणगणा जगतां हृदयङ्गमाः
त्वयि परं समवेत्य समिन्धते ॥ ६२ ॥

तर्काध्वन्यवदावदैरभिहितादव्याप्यवृत्तित्वतः
संयोगः सकलोऽपि कामपि वहन्ख्यातिं दरीदृश्यते ।
विश्वाचार्य! विचित्रमेतदिह ते दिव्यो दयास्रोतसां
संयोगः सरसोक्तिदुग्धजलधे व्याप्यैव यद्वर्तते ॥ ६३ ॥

वीप्सा वाजिमुखस्य वेङ्कटपतेरावृत्तिराम्रेडितं
व्यासस्य प्रतिबिम्बनं फणभृतां पत्युर्विभाषा गुरोः ।
मूर्तिर्भाष्यकृतः परेति जगतीसन्तोषचिन्तामणिं
सन्तस्त्वामनपायसूक्तिशिरसामाचार्यमाचक्षते ' ॥ ६४ ॥

॥ ग ॥ इत्थं स्तुतिमुखरेषु विबुधनिकरेषु प्रत्यर्थी स कविरत्यर्थमाह्लादवर्षिणीमाचार्यफणितिमाकर्ण्य व्यपगत-गर्वो विनयमुद्वहन्, उन्मत्तकीभवदपत्रपाप्रवाहपरिभ्रमण-वशजनितमिव श्लाघशिरःकम्पमसकृदनुभवन्, आत्मकृतान् हरिचरणत्रायिणीविषयान् श्लोकान् संख्यया गुणेन च तनुतरत्वात् अनाविष्कुर्वन्, 'अबोधकृतमपराधं क्षमस्वे' ति तस्य चरणयोर्द्वादशकृत्वः प्राणंसीत् ॥

सभासदस्तेऽथ समग्रहर्षाः
सहस्रमह्नाय ददुः समस्याः ।
विद्यानिधेरस्य गुरोर्विधातुं
पुंखानुपुंखानि पुनर्यशांसि ॥ ६५ ॥

सदस्यैर्वितीर्णं समस्यासहस्रं
स वेदान्तविद्यागुरुः सद्य एव ।
समापूर्य वाग्भिः समुल्लासभाग्भिः
पुनःपूजितस्तैर्जगाहे स्वगेहम् ॥ ६६ ॥

॥ ग ॥ एवं सत्त्वोत्तरङ्गं रङ्गपुरमधिवसति गुरौ जातुचित् मनोमातरिश्वपतगेश्वरसोदरीभवदश्वीयखुरकुद्दाल-निर्दलितवसुधातलबहुधासमुद्यदस्तोकरजःस्तोमचुलकितचतु-रर्णवीपयःप्रवाहाः, घटिकाविशेषा इव कालरात्रीणां, किङ्कराः

इव कृतान्तस्य, महीसुरकुलमहीधरदारणदारुणकुलिशाय-
माना यवनादयः कलशजनुषः ककुभं, काकोदरा इव
केतकीं, दावानला इवाटवीं, अल्पश्रुता इव त्रयीमावव्रुः ॥

चरमयुगाम्बुराशिकुहरोच्छलदुत्कलिका-
विशयविधानधुर्ययवनागमदूनजनान् ।
निगमकिरीटसूरिरचिरात्परिपातुमना
व्यतनुत शौरिहृत्कुतुकहेतुमभीतिनुतिम् ॥६७॥

॥ ग ॥ अनन्तरमाचार्यविरचितेनाभीतिस्तवेन
प्रादुर्भूतप्रसादो भगवान् रङ्गभूरमणः प्राणभृतामभयं विधा-
तुकामः, हयसन्ततेरचिन्तितमेवान्तमुत्पाद्य हरिदन्तरादस्मात्
कालियपरिवारमिव कालिन्दीहृदात्तमरातिवर्गं निर्गमयां-
बभूव ॥

तां दिशं यवनैर्मुक्तां त्रय्यन्तगुरुरैक्षत ।
प्रावृषेण्यदिनापायात्प्रसन्नामिव पद्मिनीम् ॥ ६८ ॥

प्रवचनकृते व्यासाचार्यैः प्रणेतृभिरर्पितां
प्रणयभरितो वेदान्तार्यस्ततोऽनु दिने दिने ।
विनतसदसे वीतातङ्कां विचित्रतरार्थिकां
यतिपतिवचोव्याख्यामाख्यादनर्गलधीरसौ ॥ ६९ ॥

अथ रङ्गपुरात्सहानुगै-
रनघाचारविदां पुरस्सरः ।
नलसेतुनिरीक्षणेच्छया
निरगच्छन्निगमान्तदेशिकः ॥ ७० ॥

॥ ग ॥ क्रमेण च गुरुरच्छहृदयः स्वच्छन्दसंक्रीडमानपाशायुधीयशुद्धान्तशातोदरीपरिषदुरोजपरिच्युत - सारङ्गमदपङ्कशङ्काकरै, रचलतल्लजप्रतिमल्लकल्लोलपरम्परा - पुनःपुनरास्फालनवशविशीर्णजलास्वादिवलाहकानुकारिभि , रपयशःप्ररोहैरिव हालाहलजननजनितैः, धूमस्तोमैरिव बाडबजातवेदसो बहुलतरैः शैवलैः कुत्रचिन्मेचकितम्, परितो लहरीसमीरास्वादमांसलपर्यङ्कवातन्धयधुर्यनिर्यन्त्रणनिश्वासश्वसनचलितशयानशार्ङ्गधन्वनाभीशतपर्णविकीर्णपरागवितानानुकृतिना, गैरिकनिकरेणेव मधुमथनसमयक्षुभितमन्दरगिरिविगलितेन, शतह्रदासमुदायेनेव शैवालपरीवाहचरेण विद्रुमपटलेन पाटलितम्, अन्यतो लतान्तसन्ततिभिरिव लहरीलतिकानां, कर्णचामरविततिभिरिव सलिलकरिकलभानाम्, विद्रुमरुचिसन्ध्यासमिन्धानतारकानुकारिणोभिर्डिण्डीरखण्डमण्डलीभिः पाण्डरितं, पंक्तिरथकुलप्रख्यातिनटीनटनरज्जुनिभेन प्रबलतरपातकविषदूषितजनजीवातुना सेतुना सीमन्तितं, निधिनिचयमिव शोभमानशंखमकर-

ल्पं, नीरजलोचनमिव निखिलभुवनाधारं पयोदगणमिव परिस्फुरितपुष्कलावर्तं, निरंकुशतरङ्गनिर्घोषनिराकृतकल्पान्तकट्टीकाट्टहासम्, तमुदन्वन्तमात्मदृशोरतिथीचकार ॥

मणिक्रमुकशुक्तिकाफणिलतादलौघं मुदा
विधाय लहरीकरे विशदफेनशाटीमपि ।
उदाररवकैतवादुचितमन्त्रमुद्घोषयन्
अपूपुजदिवाम्बुधिः श्रुतिकिरीटविद्यागुरुम् ॥ ७१ ॥

विष्वग्जृम्भितविद्रुमद्युतिमिषात्काषायचेलं नवं
बिभ्रत्कम्बुकमण्डलूज्ज्वलकरः कल्लोलदण्डान्वितः ।
प्रेषोक्तिं प्रथयाम्बभूव निनदैरुच्चैस्तरामुद्गतै-
र्वीक्ष्यापारगुणाम्बुधिं गुरुवरं व्रीलादिवाम्भोनिधिः ॥ ७२ ॥

अशेषपूज्यो गुरुरेष पुण्या-
दभ्याशमभ्येति ममेति सिन्धुः ।
उद्दीपयामास मणिप्रदीपा-
नुदग्रकल्लोलवितर्दिकासु ॥ ७३ ॥

संनिकर्षजुषि सज्जनचन्द्रे
सम्मदादिव सरित्परिणेतुः ।
सर्वतोऽपि पुलकाः समभूवन्
सान्द्रशैवलकदम्बकदम्भात् ॥ ७४ ॥

हन्तुमंहः कदलिकामब्धिहस्तिप्रसारितम् ।
शुण्डादण्डमसौ सेतुं शशङ्के कृतिशेखरः ॥ ७५ ॥

संस्नाय भक्तिभरितः सह शिष्ययूथैः
पाथोनिधेः पयसि पावनशीलशाली ।
कूटस्थमेष कुरुकानगरे गुरूणा-
मानम्य हर्षजलधौ च पुनर्ममज्ज ॥ ७६ ॥

परांकुशगुरोस्तत्र गिरां भावं प्रकाशयन् ।
ग्रन्थानभिदधे प्राचां पन्थानमयमाश्रितः ॥ ७७ ॥

ततोऽनु वृषशैलाग्रे तत्त्वं परमुदञ्चितम् ।
प्रणम्य यादवगिरिं प्रत्यपद्यत देशिकः ॥ ७८ ॥

अनिदानदयाभरं श्रुते-
रवतंसोत्पलमद्भुतं महः ।
यदुभूमिधरे कृतोदयं
यमिनां सेव्यमसाववन्दत ॥ ७९ ॥

परिपन्थिवदावदाम्बुदान्
पटुभिर्वाग्भरचण्डमारुतैः ।
अनपाययशोनिधिर्नुदन्
अनयत्तत्र दिनानि कानिचित् ॥ ८० ॥

अनुभावेन तत्रत्यान्हर्षयित्वा सुमेधसः ।
कविवादिमृगाधीशः काञ्चीं पुनरुपेयिवान् ॥ ८१ ॥

तत्र तामरससोदरनेत्रं
वृत्रवैरिमणिमञ्जुलगात्रम् ।
निस्तुलं निगममस्तकरत्नं
वस्त्ववन्दत कृती स चिरत्नम् ॥ ८२ ॥

अभिवीक्ष्य चिरात्प्राप्तमाम्नायशिरसां गुरुम् ।
काञ्चीनगरवास्तव्याः कौतुकं सुधियो दधुः ॥ ८३ ॥

॥ ग ॥ पुरे तत्र पुण्यतमे निवसतः निगमान्तगुरोर्निखिलतन्त्रस्वतन्त्रतागुणममृष्यमाणो मान्त्रिकः कश्चिदुपान्तसीमानमासाद्य वचनमिदमहन्तावल्लीपल्लवं व्याजहार ॥

" निखिलफणाधरेन्द्रकुलगर्वनिरासकला-
विततिषु मां विना विबुधवर्य न कोऽपि पटुः ।
तपनपथोत्पतद्विपुलविन्ध्यनिरोधविधौ
कलशभवेतरः कथमुपैति धुरन्धरताम् ॥ ८४ ॥

शेषः शेषत्वशैलीं प्रथयति सहसा वासुकिः स्वासुरक्षा-
लाभे लोभं दधानो दिशि दिशि स भयं लम्भितो बम्भ्रमीति ।

कार्कोटः कोटरान्तर्लुठति गिरिबिले तक्षकः क्षीणकोपः
शेते स्फीताग्रहेण स्फुरति दृशि यदा व्यक्तिमान्
रक्तिमा मे ॥ ८५ ॥

विषधरनिकरान्मया विमुक्तान्
विसृमरफूत्कृतिभीषणान्निरोद्धुम् ।
पतगपरिषदामधीश्वरोऽपि
प्रभवति नैव कुतः कथा परेषाम् ॥ ८६ ॥

मदभिमन्त्रविजृम्भितशक्तिके
महति भोगिनि फूत्कृतिवर्षिणि ।
सपदि साध्वसवारिनिधौ पते-
दुरगशायि तदुल्लसितं महः ॥ ८७ ॥

॥ ग ॥ एवंविधनिरवधिकमन्त्रशक्तिशालिना मया प्रेरितान् मरुदात्मम्भरीन् भवानपि मन्त्रविद्यावैदग्ध्येन निरुध्य विश्वविद्यास्वतन्त्रताबिरुदमव्याहतं वहता" दिति । अथ तथाविधवितथालोपमोदिनो मन्त्रवादिनो वचनमात्मकर्णपथपथिकमारचय्य गुरुरचिन्तयत् — "अहो! दुरहन्तासन्ततिरमुष्य यदयमवनिवहनविधातारमहिनिकरनेतारम्, अहितबलनिहन्तारमखिलखगनियन्तारम्, अनपायसङ्कल्पमहिराजतल्पमपि महता मोहेन न बहुमनुते । नूनमेतादृशा-

ामवलेपदमनमवश्यं कर्तव्यमिति विधत्ते वचनजातमेतत्, तत्पुनः 'यथाशक्ति निगृह्णीयाद्देवतागुरुनिन्दकान्' इत्यादिकम्" ॥

इत्थं विचिन्त्य निगमान्तगुरुर्गरीया-
नन्तः शकुन्तपतिमाकलयन्नुदारम् ।
रेखाः स सप्त विलिलेख तदा तदीयान्
रोद्धुं भुजङ्गनिवहान्महनीयशक्तिः ॥ ८८ ॥

तत्रान्तरे तत्तदपूर्वविद्या-
सङ्केतकेलीसदनस्य सूरेः ।
लोकोत्तरं लोकयितुं प्रभावं
सर्वेऽपि पौरास्सहसा समीयुः ॥ ८९ ॥

स मान्त्रिकोऽपि,

उद्वेलफूत्कारमरुत्प्ररोहै-
रुद्वेजिताशेषजनान्तरङ्गान् ।
उदग्रदर्पान्मुमुचे स सर्पान्
उद्दामविख्यातिमवाप्तुकामः ॥ ९० ॥

उत्तेरुराद्यामुरगास्तदैके
रेखां द्वितीयामपि केचिदुग्राः ।

ततः परं गन्तुमपारयन्तः
पाशोपमत्वं प्रथयाम्बभूवुः ॥ ९१ ॥

आलोक्य मन्दाननिलाशनेन्द्रा-
नाचार्यधौरेयमनोर्महिम्ना ।
दर्पस्य भूम्ना फणिराजमेकं
सर्वस्वभूतं स पुनर्मुमोच ॥ ९२ ॥

ततस्तमाशीविषमापतन्तं
विलंघ्य रेखामखिलां विलोक्य ।
वेदान्तसूरिर्विनतातनूजं
देवं जवादस्तुत दण्डकेन ॥ ९३ ॥

॥ ग ॥ तत्क्षणेन त्रय्यन्तगुरुधुर्योदीरितदण्डक-स्तुतिपरितोषितमनाः पवनाशनललनापत्रभङ्गहारी भगवान् रुद्रासुकीर्तिजीवितेश्वरोऽपि,

पक्षान्तोद्भ्रान्तझञ्झानिलवलयसमाकृष्टपाथोधरौघो
भूषाभोगिस्फटोद्यन्मणिघृणिपटलीदीपिताशावकाशः ।
किं मेरुः किं कृशानुः किमयमिन इति प्रेक्षितस्सर्वलोकै-
रभ्रादागत्य वेगादहरदहिपतिं तं पुनश्चोत्पपात ॥ ९४ ॥

उन्मदं तमुरगाधिपं बला-
दुद्गृहीतवति पत्रिशेखरे ।

निस्तुलं निगममौळिदेशिकं
निश्चिकाय हृदये स मान्त्रिकः ॥ ९५ ॥

विनम्य भक्त्या विहिताञ्जलिस्तं
विद्वद्वरं विस्मयसिन्धुमग्नः ।
वाताशनं देशिक दापयेति
वीतावलेपस्स पुनर्ययाचे ॥ ९६ ॥

॥ ग ॥ अथ मान्त्रिकाभिमतं विधातुकामेन दयापरवशेन देशिकेन पुनरपि स्तुतः पतगराजः प्रतिभट-मदविभवनाशनः पवनाशनममुञ्चत ॥

स मान्त्रिकोऽपि सन्तुष्टः संगृह्य तमहीश्वरम् ।
आचार्यमागमान्तानामभिपूज्य गिरा ययौ ॥ ९७ ॥

॥ ग ॥ स गुरुरथ सनातनसरस्वतीशिखरकासार-कुवलयस्य सामजाचलनिलयस्य भगवतो वरदराजस्याज्ञा-नुज्ञारूपानखिलानपि धर्मान् सकलगुणोपेतया सहधर्मिण्या सह समाचरन्, वासरानतिसुखमत्यवीवहत् ॥

अजायतास्मादथ वेङ्कटेशादाश्चर्यभूमा वरदो बुधेन्दुः ।
वेधा यथा माधवनाभिपद्मात् वेदो यथा वा वदना-
त्तदीयात् ॥ ९८ ॥

अधीतविद्याततिरेष तातात् आरब्धदुर्वादिनिरासलीलः।
यशःप्रकाशो वरदः प्रपेदे यतीन्द्रसिद्धान्तजयध्वजत्वम्॥

विवृण्वानानन्तः कथकसदसां कामपि धियं
विशुद्धानां वाचां कुशलमनपायं विदधतः।
विरुन्धानाहन्ताविदलनधुरीणान्स वरदः
प्रबन्धानातानीदधिकरणचिन्तामणिमुखान् ॥१००॥

पश्यतः सुतमशेषकलानां
पारगं निगममस्तकसूरेः।
मानसं सलिलमानुषकेली-
माततान परितोषपयोधौ ॥ १०१ ॥

कदाचनासौ कविवादिसिंहः
कारुण्यधारापरतन्त्रचेताः।
सद्भ्यो रहस्यत्रयसाररूपं
स्वं बोधसर्वस्वमथादिदेश ॥ १०२ ॥

॥ ग ॥ समये तत्र समुदित्वरतरणिकिरणपरिरम्भ-सम्फुल्लदम्भोजविजृम्भमाणमकरन्दलहरीसहचरीभिः सारसूक्तिपारम्परीभिः संसरणसरणिजङ्घालजनतापसन्तापनिवर्तनीं वर्तनीं प्रवर्तयन्तं, जलदमिव भुवनानुकूलावतारं, जपपरमिव पुण्डरीकाक्षान्वयभूषणं, परमव्योमपरिबृढमिवानन्तसूरिलालि-

विग्रहं, पञ्चाननमिव विविधागमगिरिपरिचयमाकलयन्तम्, स्मृतिवचनमिव वर्णक्रमव्यक्तीकरणनिपुणं, तापसमिव जटाधुरन्धरं, चन्दनमिव चर्चाञ्चितातिशयं, अमरतटिनी-पूरमिव परिगृहीतयामुनसारस्वतप्रवाहं, राघवमिव लक्ष्मणानुरागिणं, इक्ष्वाकुमिव मूलेन मनुना लब्धात्मानं, गगनतलमिव तारावृत्तितरङ्गितरुचिं, साम्राज्यमिव समन्त्रराजनिष्ठं, विधिमिव वृत्त्या मुख्ययैव लब्धार्थं, हारमिव मुक्तावदातमाकलितसूत्रस्थितिं च, मेरुमिव कल्याणमेदुरं विष्वगभिव्यक्तविविधविद्याधरं च, विनतातनयमिवाहितापनयनं, धनञ्जयमिव कृतधर्मजातानुरागं, जलधिमिव जनार्दनशोभिताशयं, ध्रुवमिव सुनीतिसिद्धोदयं, सुदेष्णाजानिमिव सूचितोत्तरोत्तरानन्दं, अलङ्कारनिकरमिव प्रतीपाक्षेपापह्नवप्रौढोक्तिभरितं विषमोत्प्रेक्षाव्यतिरेकविस्फुरितं भ्रान्तिमदनन्वयविलसितं च, निशाकरमिव निराकृतपद्मिनीप्रणयमपरागोदयानुषङ्गिणं च, नृत्योद्यतकलापिनमिव निजपक्षं विचित्रं विस्तृणानं, अध्वरमिव दक्षिणाधिगतातिशयं, आदिमयुगमिवाक्षीणसुकृतपदं, कृष्णमिव कृतनरकविजयं मधुरोदितमक्रूरवचनाञ्चितं च, समीरकुमारमिव सत्त्वातिरेकविजिताक्षं, वत्सरगणमिव भव, विभव, पराभवानन्दशालिनं वृषविरोधिविक्रममन्मथविकृति-विजयोपेतं च, तटाकमिव पुण्डरीकादिसाधुवासनामोदितं

कीर्तिमन्तं च महागिरिमिव भृगुव्यासाभिनन्द्यं, विशुद्धहेतुमिव विपक्षाद्व्यावृत्तमसत्प्रतिपक्षं च, न्यायादिमसूत्रमिव तर्कसिद्धान्तनिग्रहस्थानवादोज्ज्वलं संशयप्रमाणनिर्णयप्रयोजनं च, बुधमिव सौम्यम्, शृङ्गारमिव शुचितया विख्यातमुज्ज्वलतामुद्वहन्तं च, विवाहमिव पुरस्कृतबहुव्रतम्, वनमिव तुङ्गश्रीफलजपोपेतमधिगतमह्रायज्ञाङ्गं च, वाक्यमिवाकाङ्क्षायोग्यतासत्तिशोभितम्, नरेन्द्रमिव नानातीर्थादरिणम्, नारदमिव महतीं गीतानुगुणशब्दरेखामाकलयन्तं, धिषणावितानमिव गुणाष्टकसिद्धिसाकाङ्क्षं, सावित्रीप्रथमचरणमिव वरेण्यपदप्रयोगविख्यातं, पन्नगराजमिव प्रकटितपरब्रह्मपदत्राणभावं बहुमुखकृतशब्दोपन्यासं च, रामायणमिव कुशलवादिवर्णितश्लोकं, सुग्रीवमिव विधूतविरूपाक्षपारम्यं विनतयूथोपसेवितं च, कौस्तुभमिव पुरुषोत्तमहृदयोपलालितं, उद्यानकुहरमिव पराकृतप्रभाकरगोकलापं, गोकुलमिव कपिलालापभेदकुशलं प्रचलितपशुपतिवादं च, रसनिवहमिवाद्भुतकरुणोत्साहोपेतं कोपशोकभयशान्तिशोभितं च, कमलाकरमिव सूर्यालोकलोलुपं, गुणाश्रयमपि द्रव्यभावमलभमानं, लोकबन्धुमपि तमसाऽनभिप्लुतं अनुपजातच्छायायोगं च, सुमनोगणाग्रगण्यमपि रजोगन्धरहितं, परिशीलितस्मृतिमप्यपूर्वानुभवोदयं, सुमतिमपि विशालै-

श्वर्यानुभवनिःस्पृहम्, कल्पकमपि वासवपुरवासादरमकुर्वाणं, परित्यक्तपल्लवं परिहृतकलिकं च, सत्कृतिसादरमपि सत्कृतिनिरादरं, कर्मधारयान्वितमपि द्वन्द्वसहिष्णुम्, समाख्यालिङ्गवाक्यप्रकरणस्थानभूतमपि श्रुतेः प्राबल्यमश्नुवानं निरुपमयोगनिरतमपि निराकृतयमनियमं, सिद्धोपायजातावलम्बनमपि पराकृतदानभेदं, कृष्णवर्त्मानमपि शीतलात्मानं, समवर्तिनमपि परित्यक्तपरहिंसाव्यापारं, गुरुमपि काव्योक्तिकारिणं, दोषज्ञमपि गुणैकदर्शिनं, विबुधकुञ्जरमपि विदन्तं, कविकथककण्ठीरवमपि कटकमवनीभृतामगणयन्तं, विश्वामित्रवंशावतीर्णतया विमतविबुधसृष्टिभेदमादधानं, आगमान्ताचार्यं अखिलहरिदन्तरादागताः विपश्चितः सर्वेऽपि विश्वासममन्दं विन्दन्तः समवन्दन्त ॥

अथ पुनराचार्यभक्तिरसिकानाममीषां विदुषां परिषदि अनवरताभिलापसमुचितं स्तोत्रमिदमुदजृम्भत ॥

कस्मैचिदस्तु करुणादिमजन्मधाम्ने
कल्याणकल्पतरवे गुरवे प्रणामः ।
वेदान्तदेशिकपदं विततार यस्मै
वाचां विलासमनुभूय मुदा मुकुन्दः ॥ १०२ ॥

यं वादिहंसजलदो यतिराजवाणी-
वर्षैर्विवेकतटिता भरितः पुपोष ।

तं कल्पकं कमपि तापहरं प्रजानां
शाखाशतैरुपचितं शरणं भजामः ॥ १०४ ॥

वंशप्रदीपमनपायमनन्तसूरेः
वन्दारुमोहतिमिरक्षपणप्रवीणम् ।
आरोप्य केचिदनघा हृदयेषु नित्यं
प्रत्यक्षयन्ति परमं पुरुषं निलीनम् ॥ १०५ ॥

परित्रातुं वेदान्प्रबलकलिपाथोनिधिझरी-
जरीजृम्भन्मायाकथककृतवीचीकबलितान् ।
जगत्यां यो जज्ञे जनिजलधिजाताघलहरी-
निमग्नानप्यस्मान्निगममकुटीसूरिरवतात् ॥ १०६ ॥

निरातङ्कोदञ्चन्निरुपमहयग्रीवकरुणा-
परीरम्भोज्जृम्भत्पटुवचनधाटीविलसितः ।
प्रहृष्टैर्विद्वद्भिः प्रतिभटकथाटोपविजया-
द्वितीर्णं धत्तेऽसौ कविकथकसिंहत्वबिरुदम् ॥ १०७ ॥

प्रणादं नादत्ते क्वचिदपि कणादोक्तिपथिकः
क्षमायामायामं न च दधति मायामतगिरः ।
असंख्यान्सांख्यादेः कथितमयते दूषणगणान्
कथानां सन्तानं कविकथकसिंहे कलयति ॥ १०८ ॥

महीयान्हर्षश्चेन्मधुमथनसायुज्यमहिमा
प्रपत्त्या तत्प्राप्तिर्भवसरणिभाजां भवति चेत् ।
विवेकस्तस्याश्चेन्निगममकुटीदेशिकगिरा
विना तां विद्या का विबुधजनहृद्या विजयते ॥ १०९ ॥

कदाचिद्यश्चित्ते कलयति वतंसं सुमनसां
पदाम्भोजद्वन्द्वं कविकथकपञ्चाननगुरोः ।
स विद्यावैदग्धीं सपदि लभते विश्वविनुता-
मनन्यामाधत्ते हरिचरणभक्तिं नवनवाम् ॥ ११० ॥

प्रतिज्ञां प्रौढानां सदसि समुदीतां फलवतीं
विधातुं विख्यातांस्त्रियुगचरणत्राणविषयान् ।
सहस्रं यः श्लोकान्सपदि मधुधारासहचरान्
वितेने स श्रीमान्वितरतु मनीषाविलसितम् ॥ १११ ॥

तारल्यं तार्किकेन्द्राः ! भजत, तव कुतो वादतुष्टिः कुदृष्टे !
मान्यं मौनव्रतं ते गुरुमतकुतुकिन् ! सौगताः !
का गतिर्वः ।
इत्थं घोषाः प्रथन्ते दिशि दिशि विदुषां दीर्घसन्तोषभाजां
वादान्वेदान्तसूरौ रचयति वचनैर्दुर्जयैरुज्जिहानान् ॥११२॥

वेदाः खेदं भजेरन्मुनिनिकरवचोमञ्जरी मञ्जिमानं
मुञ्चेदञ्चेद्विवेको मुहुरपि विलयं किञ्च भज्येत भक्तिः ।

कुर्यात्क्रोधस्तमिस्रं निरवधि मदनो मन्दिमानं न बिन्दे-
द्वेदान्ताचार्यरूपं यदि भुवि न भजेद्वेङ्कटेशस्य
घण्टा ॥ ११३ ॥

हरति प्रतिवादिगर्वमुर्व्या-
मनवीनोक्तिवतंसदेशिकेन्द्रे ।
चकितश्चतुराननो विधत्ते
वनजाते वसतिं गिरौ गिरीशः ॥ ११४ ॥

( तत्तन्मतस्थविदुषां कथकत्वबुद्धि-
राराध्य देवनिचयान्बहुकाललब्धा ।
वेदान्तदेशिकगिरा विनिवृत्तगर्वा
वेगाद्विनाशमयते बत खर्वकाले ॥ )

निगमान्तगुरोः कलाकलापैः
परिभूतो न दिवा प्रकाशमेति ।
अपकीर्तिभरं कलङ्कदम्भा-
दधिगच्छन्नपि पर्वशर्वरीशः ॥ ११५ ॥

आम्नायचूडार्यपथाध्वनीनान्
पर्यायसूर्यान्परिचिन्महेऽन्तः ।
आलोकमात्रादपि ये जडाना-
माद्यामविद्यारजनीं क्षिपन्ति ॥ ११६ ॥

अन्येषु बध्नाति कथं मनीषा-
माम्नायचूडार्यवचोरसज्ञः ।
रम्ये तटाके रतिमादधानो
रज्येत हंसः किमु पल्वलेषु ॥ ११७ ॥

ललन्ति येषां वदनान्तराले
वेदान्तविद्यागुरुसूक्तिमन्त्राः ।
विज्ञाय तान्विष्णुपदैकलक्ष्यान्
कृताञ्जलिर्याति कृतान्तवर्गः ॥ ११८ ॥

वदन्तु केचिद्वचनं चिरत्नं
पठन्तु तन्त्राणि परे धरायाम् ।
वयं तु वेदान्तगुरोरभिख्यां
सङ्कीर्त्य सद्यः सफला भवामः ॥ ११९ ॥

विलोक्य चेतः ! कलुषाम्बुराशिं
वृथैव चिन्तामिह मा कृथास्त्वम् ।
अस्माकमास्ते तरणिर्गुणाढ्या
त्रय्यन्तविद्यागुरुभक्तिरूपा ॥ १२० ॥

वैराग्यं चेद्भवति विषयारण्यवीथीविहारे
भक्तिर्भव्या भगवति रमामन्दिरे बन्धुरा चेत् ।
कालक्षेपो निगममकुटीदेशिकेन्द्रोक्तिभिश्चेत्
का वा काङ्क्षा वद हृदय ! ते मुक्तिरूपे पुमर्थे ॥ १२१ ॥

कृतमुखजनसेव्यान् कर्मधीभक्तियोगान्
कृपणदुरवगाहान्वीक्ष्य शोकातुराणाम् ।
प्रपदनपदवीं नः पाप्मनां वारयित्रीं
प्रथयति दययाऽसौ सर्वतन्त्रस्वतन्त्रः ॥ १२२ ॥

कलशजलधिकन्याकान्त ! कारुण्यराशे !
विरचितविनतिस्त्वामर्थये कञ्चिदर्थम् ।
अनघमतिविलासैरागमान्तार्यदासैः
सहृदयजनसेव्यैः सङ्गमापादयेथाः ॥ १२३ ॥

निगमान्तगुरोः स्तोत्रं नित्यमेतत्पठन्ति ये ।
प्रत्यक्षयन्ति निकटे प्राचीनोक्तिमयं हयम् ॥ १२४ ॥

इति स्तुतिवचोधारामुज्जृम्भयति सज्जने ।
कवितार्किकसिंहोऽसौ करुणादृष्टिमादधे ॥ १२५ ॥

विद्वद्भोग्यैर्विमलचरितैर्विश्वमेवं पुनानं
विद्यामाद्यां त्रिमतकथकैर्दूषितां भूषयन्तम् ।
वीक्ष्याचार्यं विभुरहिगिरेरात्मघण्टावतारं
सङ्कल्पो मे सफल इति स श्रीनिवासो जहर्ष ॥१२६॥

काले काले फणिपतिसरोगाहनं निर्मिमाणः
पश्यन्भक्त्या परमपुरुषं हस्तिशैलान्तरङ्गम् ।
विद्यास्तास्ता विबुधहृदयामोदवर्षी स काञ्च्यां
व्याकुर्वाणो विजयमभजद्वेदचूडार्यवर्यः ॥ १२७ ॥

श्रीमते निगमान्तमहादेशिकाय नमः



सशङ्खचक्रलाञ्छनः सदूर्ध्वपुण्ड्रमण्डितः
सकण्ठलग्नसत्तुलस्यनर्घपद्ममालिकः ।
सितान्तरीयसूत्तरीययज्ञसूत्रशोभितो
ममाविरस्तु मानसे गुरुस्स वेङ्कटेश्वरः ॥

(सप्ततिरत्नमालिका)

जयति निगमचूडा जीविका देशिकानां
जयति गुरुरमुष्या जन्मसीमा दयायाः ।
जयति भुवनरक्षाजागरूका तदुक्तिः
जयति जगति तस्यां जातहर्षः समाजः ॥१२८॥

इति

श्रीकौशिककुलतिलकश्रीवेङ्कटेशदेशिकदयिततनयस्य
परवस्तु वेङ्कटगुरुचरणजलजषट्चरणान्तःकरणस्य
कवितार्किकसिंहस्य वेदान्ताचार्यापरनामधेयस्य कृतौ

# वेदान्ताचार्यविजये चम्पूप्रबन्धे

## षष्ठः स्तबकः



कल्पद्रुः कविवादिकेसरिगुरोः प्रज्ञासुधावारिधेः
जातः कश्चन कल्पितार्थविततिश्चम्पूप्रबन्धात्मना ।
तस्याम्नायकिरीटदेशिककथामाध्वीझरीमुद्वहन्
षष्ठोऽयं स्तबकः करोतु सुमनःकर्णावतंसश्रियम् ॥

## समाप्तोऽयं श्रीमदाचार्यचम्पूप्रबन्धः



On page 108, line 11:

'सिलं किमनलं भवे' दित्यादिना सूचितं

## वैराग्यपञ्चकम्

सिलं किमनलं भवेदनलमौदरं बाधितुं ?
  पयः प्रसृतिपूरकं किमु न धारकं सारसम् ? ।
अयत्नमलमल्लकं पथि पटच्चरं कच्चरं
  भजन्ति विबुधा मुधा ह्यहह कुक्षितः कुक्षितः ! ॥ १ ॥

क्षोणीकोणशतांशपालनकलादुर्वारगर्वानल-
  क्षुभ्यत्क्षुद्रनरेन्द्रचाटुरचनाधन्यान्न मन्यामहे ।
देवं सेवितुमेव निश्चिनुमहे योऽसौ दयालुः पुरा
  धानामुष्टिमुचे कुचेलमुनये दत्ते स्म वित्तेशताम् ॥ २ ॥

ज्वलतु जलधिक्रोडक्रीडत्कृपीडभवप्रभा-
  प्रतिभटपटुज्वालामालाकुलो जठरानलः ।
तृणमपि वयं सायं संफुल्लमल्लिमतल्लिका-
  परिमलमुचा वाचा याचामहे न महीश्वरान् ॥ ३ ॥

दुरीश्वरद्वारबहिर्वितर्दिकादुरासिकायै रचितोऽयमञ्जलिः ।
यदञ्जनाभं निरपायमस्ति मे धनञ्जयस्यन्दनभूषणं धनम् ॥ ४ ॥

शरीरपतनावधि प्रभुनिषेवणापादनात्
  अबिन्धनधनञ्जयप्रशमदं धनं दन्धनम् ।
धनञ्जयविवर्धनं धनमुदूढगोवर्धनं
  सुसाधनमबाधनं सुमनसां समाराधनम् ॥ ५ ॥

नास्ति पित्राऽऽर्जितं किञ्चिन्न मया किञ्चिदार्जितम् ।
अस्ति मे हास्तिशैलाग्रे वस्तु पैतामहं धनम् ॥

वैराग्यपञ्चकं समाप्तम्

श्रीहयग्रीवाय नमः

श्रीमते रामानुजाय नमः

श्रीमते निगमान्तमहादेशिकाय नमः

# आचार्यचम्पूव्याख्या

(प्रथमः स्तबकः)

पृ. श्लो.

1 १ आदौ श्रियमधिकृत्य मङ्गलश्लोकाः सप्त। प्रथमश्लोके प्रथमे द्वितीये च पादे 'यदि'ति अपृथक् पदम्; तृतीये तु पृथक्। विस्तृतव्याख्या आङ्ग्लोपोद्घाते द्रष्टव्या।

२ दनुजपरिपन्थिप्रणयिनी = लक्ष्मीः।

2 ३ प्रणिपतति = नमस्कर्तरि पुरुषे; बलदमनः = इन्द्रः।

४ सहचरी = सदृशी (रेखाविशेषणम्); कलशतटिनीकान्तः = क्षीरसमुद्रः, तस्य दुहितुः = लक्ष्म्याः।

५ धनिका एव स्वगृहे गजरक्षणं कर्तुं प्रभवन्ति।

६ पुनरुदरसंसर्गशमनैः—लक्ष्मीकटाक्षेण इह लोके पुनर्जन्म न प्राप्नुवन्ति मनुष्याः।

७ 'क्रीडा' इति पठितव्यम्; त्रियुगः — ज्ञानशक्तिबलैश्वर्यवीर्यतेजोरूपैः षड्भिः गुणैः पूर्णः भगवान् विष्णुः; बृन्दं रुचां = कान्तिपुञ्जात्मिकां लक्ष्मीम्।

3 ८-९ कृष्णविषयकं श्लोकद्वयम्—कृष्णत्वे रक्तत्वं इत्येवं विरुद्धाकारवत्वात् आश्चर्यता। विधुः = चन्द्रः परमात्मा च; अब्जरथाङ्गनन्दककरत्वं = पद्मचक्रवाकानन्ददायककिरणवत्वं, शङ्खचक्रखड्गपाणित्वं च; प्रत्यूढदोषोदयत्वं = रात्रिप्रारम्भनिवर्तकत्वं, सर्वदोषनिरासकत्वं च; विश्वंभरत्वे रजोवहनाभाव इति वैचित्री—रजः = रजोगुणः धूलिश्च; हरित्वे अवनकर्तृत्वमिति च वैचित्री।

3 ९ अङ्कपाली=आलिङ्गनम् ; किम्मीरं=कर्बुरं (विचित्रवर्णं) ।

१० 'दूरप्रोत्क्षिप्त' इति पठितव्यम् । धानुष्कधुर्यः=श्रीरामः; आदत्त आङ् पूर्वकात् ददातेः आत्मने पदे लङ् ।

११ काचन देवता—भगवत्करस्थितचक्रम् ।

4 १२ चक्रराजः=सुदर्शनचक्रं, चक्रवाकश्च; विधोः करः=भगवत्पाणिः, चन्द्रकिरणश्च; कान्तानुषङ्गः=शोभनसंबन्धः, प्रियया सङ्गश्च; विरोधाभासालंकारः ।

१३-१४ वाल्मीकिविषयौ । कुहूकण्ठः—कोकिलः; कूजन्तं राम रामेति श्लोकस्य भावोऽनुसन्धेयः ।

१४ सतां नाथः=नक्षत्रेशः (चन्द्रः), सत्पुरुषश्रेष्ठश्च । रामानुभवः= स्त्रीणामनुभवः, श्रीरामगुणानुभवश्च; गवां=किरणानां वाचां च । श्लेषालंकारः ।

१५-१६ व्यासविषयौ । १५. पर्वान्तरं=पर्वमध्यं (पर्वेति परिच्छेदनाम, इक्षुकाण्डसन्धिभागश्च), वृत्तरत्ना=भारते वृत्तं छन्दः चरित्रं वा, वर्तुलरत्नोत्पत्तिरिक्षौ । श्लेषालंकारः ।

१६ व्यासन्ति—व्यासवदाचरन्ति ।

5 १७ अव्यासुः—अव् धातोः आशीर्लिङि प्र. पु. बहुवचनं । अदर्शि— दृशेः णिजन्तस्य कर्मणि लुङ् ।

१८ 'नम्माल्वार्' इति प्रख्यात शठकोपमुनिविषयः श्लोकोऽयम् ।

१९ 'नाथमुनि' विषयः । तरलत्वं=चञ्चलत्वं, उज्ज्वलत्वं, नायक-मणित्वं च । विरोधाभासः ।

२० 'श्रीमद्यामुनाचार्य' विषयः । भवं=शिवं संसारं च ।

6 २१-२२ 'श्रीरामानुज' विषयौ—रूपकालंकारः ।

२१ विष्णोःपदे=परमपदे आकाशे च; यतिः — श्रीभाष्यकारः रामानुजः । इन्दुः चन्द्रः ।

6 २२ कलादानात्—देवेभ्यः कलां इन्दुः ददातीति पुराणप्रसिद्धम्। कला=चन्द्रशकलं, विद्या च। यतिक्ष्मापरिबृढः यतिराजः; दोषापेतः=निर्दोषः; ताराप्रियतमः=चन्द्रः, स तु दोषोपेतः रात्रौ उदीयमानत्वात्। यतिराजस्तु निर्दोषः इति भावः। गुरुतां= आचार्यत्वं श्रेष्ठत्वं च।

२३ कूरेशः (रामानुजशिष्यः) 'दोराहव' इति पठितव्यम्। पारावरीं परावरतत्त्वविवेचनम् ब्रह्मजीवयोः उत्कर्षापकर्षौ, जीवब्रह्मणोः भेदमित्यर्थः।

२४ श्रीवेदान्तदेशिककृतिविषयः। तदीयान् कृतीन्द्रान्—श्रीदेशिक-रचनाः (आम्नायचूडार्यः=वेदान्ताचार्यः)।

२५-२६ परवस्तु नामा — कूटस्थः। वेदान्तविद्यागुरुः=वेदान्तदेशिकः।

7 २६ परवस्तुवंशजनयः सर्वेऽपि वेदान्तदेशिकनानानामधारिणः व्यराजन्त।

२८ परवस्तुस्वामिनो व्यासाद्यपेक्षया उत्कर्षं वर्णयति। व्यसनं=विभागः दुःखं च। वातंधयग्रामणीः=आदिशेषः; भोगः=सर्पशरीरं सुखं च। धराश्रुतिभवः=वाल्मीकिः; श्रीरामसंबन्धः स्त्रीसंगश्च। गुरुः (बृहस्पतिः) मौढ्यं मूर्खत्वं, गुरुग्रहस्य स्थानविशेषप्रयुक्तं दौर्बल्यं च। हिमकरः चन्द्रः; जडत्वं अप्रबुद्धत्वं शैत्यं च। सतां= सत्पुरुषाणां नक्षत्राणां च। व्यतिरेकालंकारः।

२६ वावदूकाः=वादिनः (निक्षेपविद्याभिधकामधेनुः इति पाठः संभाव्यः।

8 ३० अग्राहि—ग्रह् धातोः कर्मणि लुङ् प्रथमपुरुषैकवचनम्।

३१ आकल्पं कल्पपर्यन्तं। आकल्पः आभरणं;

वृषगिरिवासी — भगवान् वेङ्कटेशः; ग्रन्थकर्तुः पिता वेङ्कटेश-नामधेयः। वृषाचलासक्तिजुषं विनीतं —,

भगवत्पक्षे—वृषाचले आसक्तिजुषं; विना—गरुडेन, नीतम्।

पितृपक्षे—वृषे धर्मे अचलामासक्तिं भजन्तं, विनयान्वितं;

३२ विवित्सा—वेत्तुं इच्छा। सिसृक्षा—स्रष्टुं इच्छा।
आम्नाय-चूडा-गुरुः=वेदान्ताचार्यः।

## श्रीदेशिकगद्यविवरणम्--

विजयीभवतुचिरंतनेति। चिरंतनफणितीनां वेदानां शिखराः उपनिषदः, तेषां परिषत् समूहः, सैव अमृतविचयः पीयूषधारा। तत्सेकबलात् मृदुले हृदयरूपे उदारे महति केदारे संरूढाः मतिविततिरूपाः पुण्ड्रलतिकाः ग्रहणधारणादिरूपैर्दलैरुपचिताः तदुदञ्चितः सर्वतन्त्रस्वतन्त्रतारूपो गुणः सूत्रम्, तत्र ग्रथितैः यशोधोरणीरूपाभिः रमणीयमणिमालिकाभिः परिष्कृता धरणीरूपा रमणी येन वेदान्तगुरुणा स इत्यर्थः। एवं सर्वतन्त्रस्वतन्त्रत्वमुक्तम्। अथ दिव्यघण्टावतारत्वमाह—निर्ममेति। दर्वीकरोर्वीभृत् फणिगिरिः शेषशैलः।

पृष्ठम् 9

बलदमनस्य इन्द्रस्य हरिद्दिशा प्राचीत्यर्थः। महद्वाणीति—महतां श्रीयामुनरामानुजादीनामाचार्याणां वाणी। कृतमुखाः पण्डिताः। अपर्णापरिबृढः पार्वतीपतिः। शर्वमपीति शैवादिमताभिप्रायेण। शङ्करमपीति अद्वैताभिप्रायेण। अखण्डितस्य बोधस्यायनं स्थानमिति भावः। विपुलेति—समुद्रपक्षे, विपुलायाः भूमेरलङ्कारैरित्यर्थः; वचोभरपक्षे विपुलाः अधिकाः उपमादयोऽलङ्कारा येषु ते। रसः जलं शृङ्गारादिश्च। घनो मेघः सान्द्रश्च। वेदोपक्रमाधिकरणं पूर्वमीमांसागतम्। तत्र सिद्धान्ते, "उच्चैः ऋचा क्रियते इत्यादिषु ऋगादिपदानाम् ऋग्वेदाद्यर्थकत्वं विहाय पादव्यवस्थापन्नमन्त्राद्यर्थकत्वे पूर्वविरोधः संजायते। पूर्वम् ऋग्वेदादेरेव वेदशब्देन प्रस्तुतत्वात्। अतो वेदपदस्य पूर्वश्रुतस्य विकासकत्वं तत्र ऋगादिपदाना" मित्युक्तम्।

आचार्यवचोभरस्तु विरोधलेशस्याप्यभावात् कार्त्स्न्येन वेदव्याख्यारूपः तेषां वेदपदानां विकासमादधाति। शब्दान्तरादिभिरिति।

पूर्वमीमांसाद्वितीयाध्यायोक्तानि कर्मभेदकप्रमाणानि शब्दान्तरादीनि। तैरज्ञातपूर्वाः धर्माः दानहोमादयो ज्ञाप्यन्ते। वचोभराः ईश्वरादीनामन्यादृशधर्मविशेषज्ञापकाः। कलापैः बर्हिपिञ्छैः। वर्णाः कलापपक्षे नीलादयः, वचोभरपक्षे अकारादयः। धरैः पर्वतैः। धातवो गैरिकादयः भ्वादयश्च सहस्रधामभिः सूर्यैः। सवैः क्रतुभिः। अच्युतस्तोत्ररूपैः प्रगीतमन्त्रसाध्यगुणिगुणाभिधानरूपत्रिवृदादिस्तोत्राकाराः यज्ञेषु न च्युताः। वचोभराः अच्युतस्य भगवतो गुणकीर्तनरूपाः।

पृष्ठम् 10

रूपैरिति। अर्थोपलम्भकारणत्वं रूपाणां, प्रत्यक्षे उद्भूतं रूपं कारणमित्यस्येष्टत्वात्। वचोभराः श्रुत्यादिमुख्यार्थप्रतिपादकाः। अनन्यथासिद्धत्वे सति नियतपूर्ववृत्तित्वं कारणलक्षणं तार्किकेष्टम्। वचोभराः प्राचीनवृत्तिग्रन्थभावानामनन्यथासिद्धानां प्रकाशकाः। भावैः द्रव्यादिभिः षड्भिः भावपदार्थैः। तत्र द्रव्यादीनां पञ्चानां समवायानुयोगित्वप्रतियोगित्वसद्भावात् परिस्फुरत्समवायपदत्वम्। समवायस्य तु समवायरूपार्थविशेषे स्वस्मिन् विषये परिस्फुरत् समवाय इति पदं यस्येति तथात्वम्। समवायस्य पदं समवायनिरूपितानुयोगित्वादि समवायवाचकपदं च। वचोभरपक्षे परिस्फुरत्समवायानि प्रकाशमानपरस्परान्वयानि पदानि येषु तैः। पदैः सुबन्ततिङन्तरूपैः। तत्र प्रकृतिप्रत्ययोभयरूपता। वचोभरेषु प्रकृतितत्त्वतत्कार्यविषयकप्रत्ययजनकत्वम्। विधायकप्रत्ययैः लिङ् लोडादिभिः। शेषिभावना विशेष्यभूतार्थभावना शब्दभावना वा; शेषभूतफलकर्मविषयकभावना वा। वचोभराः परमशेषिपरमात्मविषयकनिरन्तरस्मृतिबोधहेतवः। साधनैः सद्धेतुभिः। नाना लक्षणव्याप्तयः पञ्चलक्षणीचतुर्दशलक्षणीसिद्धांलक्षणादिग्रन्थपरिशीलितनानाव्याप्तयः, अन्वयव्यतिरेकव्याप्तिप्रभेदाः वा वचोभरपक्षे लक्षणं तत्तद्वस्तुलक्षणं वा अध्यायो वा। भूयोदर्शनेति। व्याप्तिनिश्चये भूयोदर्शनं कारणमिति तार्किकाः। वचोभरे तु पुनः पुनर्दर्शनेन

वास्तवार्थबोधकत्वम् । एकधर्मीति । निश्चयो हि संशयनिवर्तकः । संशयश्चैकधर्मिविशेष्यकनानाविरुद्धधर्मप्रकारकज्ञानम् । अतः स विरुद्धनानाकोटिरूपविषययुक्तं तद्विषयं यत् ज्ञानं तद्रूपः । तन्निवर्तकश्च निश्चयः । वचोभरस्तु भगवदादिस्वरूपविषयनानाकल्पज्ञानं योगिनिष्ठमपि निवर्तयितुं प्रभुः । वेदेति । प्रपन्नाः भक्तवत् भगवदनुकम्प्या भवन्ति । अतः वेदेन कृता या आत्मनामन्तविरोधिनी विनाशनिवारिका संख्या ज्ञानं भक्तियोगादिविषयम् । तच्छालिनः ज्ञानिनः यस्याः धुरोऽधिकरणमाश्रयः तां धुरं वहन्तीति प्रपन्नास्तादृशाः । वचोभरस्तु वेदकृतान्तस्य वेदसिद्धान्तस्य विरोधिनः संख्यावन्तः मतान्तरस्थाः, तैः सहाधिके रणे वादे धुरं वहन्ति । शर्करा क्षुद्रपाषाणः इक्षुपरिणामश्च । कर्णः राधेयः श्रोत्रं च । विजयः अर्जुनः जयश्च । असाधारणत्वमन्यपुरुषवचोविलक्षणत्वम् । असाधारणा हेत्वाभासाः सपक्षविपक्षव्यावृत्तत्वेन लक्षिताः । इमे तु वचोभराः न तथा, सपक्षे आदरविशिष्टे पुरुषे प्रतिष्ठिताः । अनन्तः आदिशेषः । स वसुधाधारकाकारविशिष्टः । वचोभरोऽन्यादृशः असंख्यभावाविष्कारकः नवीनामृतधारावदास्वाद्यश्च । अनसूयाऽत्रिपत्नी असूयाविरहश्च । ऋश्यशृङ्गपत्नी शान्तानाम्नी । शान्ते शमरसेऽस्य कुतूहलम् । विश्वामित्रस्य शस्त्रकृतः उल्लासो वारितो वसिष्ठेन; अयं विश्वजनेष्वमित्रभूतानां शास्त्रान्तराणामुल्लासं वारितवान् । व्यासः अनेकपुरुषजन्मपरभारतवंशचरित्रपर्यन्तानेककथाप्रवर्तकः । अयं तु नानाजन्मभारपरिश्रान्तजनादरणीयभगवत्कथः । अथ दशावतारभगवत्साम्यं वर्णयति—सनातनेति । सनातनझषो मीनावतारमूर्तिः । स मीनः सोमकराजपर्यन्तेषु कीर्तिकरः । अयं सोमवत्कान्तां धवलां मधुरां कीर्तिमुदञ्चितवान् । मन्दरागेति । मन्दरस्य नाम अगस्य पर्वतस्य धुरं भारं धारयतीति कूर्मावतारोऽत्र वर्ण्यते । मन्दरागाः विरक्ताः, तेषामग्रेसर इति श्रीदेशिकपक्षेऽर्थः । विश्वम्भरेति विश्वम्भरा भूमिः, तस्यामासक्तिर्वराहस्य । विश्वम्भरो भगवान्, तस्मिन्नासक्तिराचार्यस्य । दर्शितेति ।

प्रह्लादजनकस्य हिरण्यकशिपोः दुष्टसत्त्वस्य भेदनं नृसिंहकृतम्। सर्वाह्लादकसात्त्विकवृत्तिरयम्। तत्क्षणेति। एकेन पादेनावन्यपेक्षया सहस्रगुणमामोदिताः विबुधाः देवाः वामनेन। अयं भगवत्पादत्राणविषयकश्लोकसहस्रनिर्माणसंतोषितसर्वप्राज्ञः। पराहतेति। दोषास्पदरेणुकाख्यमातृघाती परशुरामः। अयं तु स्वपदरेणुभिः परेषां कलङ्कान् पराहतवान्। महत्तरेति। श्रीरामः महत्तरप्रभावप्रदर्शनेन जलाशयं समुद्रराजं वशे चकार; अयमजिह्मगानामृजुमार्गगामिनां धर्मं प्रदर्श्य जडाशयान् जडचित्ता(मन्दमतीन्)ननुकम्पितवान्। यामुनेति। बलरामः यमुनामुच्चकर्ष; अयं यामुनार्यसूक्तिमहिमविधायी।

पृष्ठम् 11

शतदूषणीति। श्रीकृष्णः शतकृत्वः दूषणोक्तिसहनेन ततः परं दुष्कर्मवशादागतं दमघोषसुतं शिशुपालं पराचकार। अयं तु कर्मकाण्डदमनाद्वैतिघोषजातं शतदूषणीग्रन्थदर्शितैरुत्तरैः पराचकार। कलितेति। कल्की विष्णुयशस्सुतः। अयं विष्णोर्यशोविततिविधायी। मधुनिरासेति। श्रीहयग्रीवः मधुनामकासुरनिरासार्थोल्लसितेन सज्जनचरितरहस्यार्थादिनिक्षेपमूलकरक्षार्थेन अधिकेन रणसारेण निरपाययासूक्त्या च चतुर्मुखखेदपरिहारी। (किञ्चिदन्यथाऽप्यत्र योजना स्यात्।) अयं तु मधुरसातिशयितरसाभिः सच्चरित्ररक्षा, रहस्यरक्षा, निक्षेपरक्षा, अधिकरणसारावली इत्यादिभिः सूक्तिभिः भगवदाभिमुख्यं प्रायः सम्पाद्य तत्खेदनिवर्तकः। सुकृतेति। सारसश्चक्रवाकः, तदानन्दहेतुः सूर्यः। सुकृतोत्कर्षादयं सानन्दः। पोषितेति। भावानां प्राणिनां जातस्य समूहस्य तात्पर्यं स्वस्मिन्नैदम्पर्यं पोषितं यया तादृश्या चन्द्रिकया कुवलयानामुत्पलानामाह्लादकः विकासहेतुः। अयं तु गीतातद्भाष्यभावबोधक 'तात्पर्यचन्द्रिका'ख्यग्रन्थानन्दितभूमण्डलः। सवार्थेति। सर्वेषामर्थानां सिद्धौ साभिलाषः, सर्वार्थसिद्धिनामके ग्रन्थे साभिलाषश्च। बहुविधंमानं प्रमाणमेकमेव शरणं यस्य। 'प्रमाणशरणा वय' मित्युक्तिरत्र स्मर्तव्या।

योगस्याचारोऽनुष्ठानं योगाचारः। तमेष प्रख्यापयामास। योगाचारो नाम कश्चिद् बौद्धः, तस्यासौ प्रत्याख्याता। यद्वा, योगस्य आचारस्य च प्रख्यापक इत्यपि योज्यम।

पृ. श्लो.

11 ३३ कथासुधां—सुधा जड(जल)भूतसमुद्रवितीर्णा, शेषलभ्या च (देवताभिरेव लभ्या); कथा तु अजडैः प्राज्ञैः वितीर्णा, अशेषैः सर्वैः लभ्या च; सुधाविलक्षणेयम्।

३४ चक्राङ्गः—चक्राकारकण्ठः हंसविशेषः।

12 ३६ सत्त्वभरितः=सत्वगुणपरिपूर्णः जलजन्तुपरिपूर्णः; मणिः= कौस्तुभः। अम्भोनिधेः ग्रन्थकर्तुः पितुश्च सादृश्यम्। पूर्णोपमा।

३७ काल्ये=प्रातः।

13 ४० सरस्वती—वाक् (कन्या); वरं श्रेष्ठं भर्तारं च।

४१ अपश्चिमः यः कविः — वाल्मीकिः; तरणिसन्ततिं सूर्यवंशं प्रवाक् यः — व्यासः; उडुपवंशं चन्द्रवंशम्। अदश्चरितेति— निगमान्तगुरुचरित्रेत्यर्थः। तयोः वाल्मीकिव्यासयोः।

४२ वेदकिरीटसूरेः=वेदान्ताचार्यस्य; अवधूटी—स्त्री; लुम्पति= नाशयति।

14 ४४ कवेरजां—'कावेरी' नदीम्।

४५ गन्धफलीं—चम्पकमञ्जरीम्। द्विरेफैः, भृङ्गैः।

४६ द्युतिवैखरी=कान्तिवैभवः।

४७ सौमनसः मणीन्द्रः=देवानां चिन्तामणिः।

४८ नः कविता=एष ग्रन्थः (एतच्चम्पूः); मृडस्य=शिवस्य।

15 ४९ 'हानिरेकेन' इति पठितव्यम्।

५० उत्कण्टकां=उद्भूतकण्टकाम्; चञ्चरीकः=भ्रमरः।

16 ५४ कविः=पण्डितः, सूर्यश्च।

[पृ]ष्ठम् 16 श्रीकाञ्चीपुरीगद्यम् —

अमरपरिबृढ=अमरश्रेष्ठ। लोलम्बनिकुरम्बम् भ्रमरकदम्बकम्। [सु]रभिल=वासित, मत्तद्विरदेन मतगजेन। चन्द्रशाला शिरोगृहम्। [ब]लरिपुचापः इन्द्रधनुः। प्रतोलिका वीथिः। त्रोटिः चञ्चुः। 'सन्दोह-[स]न्देहलोहित' इति पठितव्यम्।

[पृ]ष्ठम् 17

क्षणः उत्सवः, निमेषभागश्च। मन्दमन्दाक्षा — स्वल्पलज्जा। [प]ाठीननयना मकरलोचना स्त्री। मणितं रतिकूजितम्। तृतीयैक-[व]चनान्तं सर्वमपि विद्वज्जनविशेषणम्। देवकीनन्दनेन—कृष्णेन। बलभद्रसंयोगः=बलरामसंयोगः, बलस्य भद्रस्य च योगश्च। सत्य-भामाञ्चितेन=सत्यभामया अञ्चितेन, सत्यं-भा-मा आभिरञ्चितेन च। फणधराधिराजेन=आदिशेषेण; क्षमाधृतिनियमेन=धरणीधरणकर्मणा; क्षमा क्षान्तिः, धृतिः धैर्यं, नियमः व्रतं च। भ्रमरहितेन=भ्रमराणां हितेन; भ्रमशून्येन च। कृपोपेतेन=कृपाचार्ययुक्तेन, दयालुना च। खरः=दण्डका-रण्यवासी खरनामकराक्षसः, मूर्खश्च। भूतनया=भू-तनया सीता, नये न्याये अनुरागः। ऊर्मिला=लक्ष्मणपत्नी, ऊर्मिलः तरङ्गितः। अग्रजन्मा =श्रीरामः, ब्राह्मणश्च। श्रुतिकीर्ति=शत्रुघ्नपत्नी, श्रुतिः कीर्तिश्च। श्रुतिः = श्रोत्रं, वेदश्च। असत्कार्यकथा=तार्किकसंमतासत्कार्यवादः, दुष्टकार्यव्यवहारश्च। सर्वज्ञेन समेक्षणेन=सर्वज्ञो रुद्रो विषमाक्षः, इह तु सर्वज्ञता समेक्षणता चेति विशेषः। भुजङ्गः = सर्पः विटश्च। विनता-नन्दनः = वैनतेयः गरुडः प्रणतप्रीतिकरश्च। कलानिधिः = चन्द्रः, विद्यानिधिश्च। विरोधाभासः। पञ्चाननाः सिंहाः, दुर्वादिगजभञ्जकाः विस्तृतवाग्विभवाः विद्वत्सिंहाश्च। राजहंसाः पक्षिविशेषाः, उत्तमयतयश्च विचित्रपत्रिसंभिन्नसालावलीसमुल्लसिता = अद्भुतबाणसंभिन्नसप्तसाल-वृक्षसमुल्लसिता, नानापक्षिसंयुक्तप्राकारमण्डिता च (सालः प्राकारः वृक्षविशेषश्च)।

पृष्ठम् 18

वैमानिकसेना = देवसेना । वैशाखमहः = सुब्रह्मण्यतेजः, वैशाखमासीयब्रह्मोत्सवश्च । वैजयन्ती — वनमाला, तोरणावलिश्च । मणिप्रकाशः = रत्नप्रकाशः; तत्वचिन्तामणिव्याख्यारूपः प्रकाशापरनामा दीधितिग्रन्थश्च । प्रख्यापितेत्यादि — नगरीपक्षे, विधेः ब्रह्मणोऽद्भुतशक्तेर्व्याप्तिविषयवादः प्रख्यापित इत्यर्थः । गन्धवहस्तनंधयः मन्दमारुतः ।

पृ. श्लो.

५५ हिरण्यदानं = हिरण्यकशिपुखण्डनं कादाचित्कमभूत् ; काञ्ची सतां तु सदा स्वर्णदानं भवति । धरणी-पतिरपि (रामः) धरणी-कन्यां (सीतां) कामयामास इति धर्मव्याहृतिः; इह तु सदा धर्मसंरक्षणम् । सत्यायोगः = सत्यभामया योगः; सत्यस्य अयोगः । इह तु सदा सत्ययोगः । नाथस्य भगवतः विष्णोः श्रीनृसिंह-राम-कृष्णावताराः निर्दिष्टाः अस्मिन् श्लोके । तेभ्यश्च व्यतिरेकेण काञ्चीसन्तो वर्णिताः ।

५६ बलद्विषत्पुरीविजयाप्ताः — बलनाम्नः असुरस्य द्विषत् शत्रुः इन्द्रः, तत्पुरीजयेन लब्धाः ।

५७ निष्पन्दत्वं = निश्चलत्वं । तदुदितात् — वेणीरुचां वीक्षणेन सञ्जातात् । हरिन्मणी = इन्द्रनीलमणिः ।

19 ५८ प्रधनं = युद्धं । बलाहितशिला = इन्द्रनीलमणिः । विबुधवाहिनी = आकाशगङ्गा ।

५९ वाणीवल्लभाः विद्वांसः । वलभी चन्द्रशाला । सन्देहालंकारः । ऐन्दवमहस्सन्दोहः = चन्द्रकिरणराशिः ।

६० अब्जिनीप्राणवल्लभः = सूर्यः; सूर्यस्य चित्रभानुशब्दव्यपदेश्यत्वं एतन्मूलकमित्यर्थः ।

६१ द्योतः प्रकाशः ।

६२ वन्दनमाला = द्वारलम्बितोरणमाला ।

श्लो.

६३ अभ्रङ्कषाः आकाशचुम्बिनः, अवनीरुहाः वृक्षाः । संबन्धातिशयोक्तिः ।

0 ६४ मित्रत्वात् सूर्यस्य उपकरोति (मित्रः सूर्यः, मित्र-सुहृत् ) उत्प्रेक्षा ।

६५ वियद्गजः — आकाशे सञ्चरद्देवगजः । उद्धुनाने — बलवत् चालयति सति ।

६६ पयोधरयुगी —मेघयुगलं, स्तनयुगलं च । नक्षत्रदाम=नक्षत्रावलिः नक्षत्रमाला च । (सप्तविंशतिमौक्तिकैः कृता नक्षत्रमाला स्यात् ) शशी=चन्द्रः, कर्पूरं हरिचन्दनं वा । अत्र पृथ्वी नक्षत्रदाम शशिनं च दरीधरीति, नभश्च वल्मीकं वहते इति विरोधध्वनिः ।

६७ राजनि=चन्द्रे, दण्डयितरि नृपे च ।

६८ विख्यातं अब्जयुगलं=कमलं, चन्द्रश्च । कमलं, वनान्ते (जलान्तः) वसति, अन्यः (चन्द्रः) पाताललोकं गच्छति ।

६९ अणूदरी = कृशोदरी स्त्री । वसूत्करान् किरणपुञ्जान् । शुचिसात्कुरुते=पवित्रीकरोति ।

21 ७० आलोकसंबन्धाभावस्तम इति तार्किकाः । तर्काध्वगः इति पाठः । आलोकः = प्रकाशः दर्शनं च ।

७१ वियद्धुनीवीचिषु—आकाश-गङ्गोर्मिषु ।

७३ निलिम्पदन्ती—देवगजः । प्रतिकुम्भी प्रतिगजः ।

७१, ७२, ७३-भ्रांत्यलंकारः ।

७४ पौराणां अर्थतृष्णा, योगभङ्ग इत्यादिकं नास्ति । कुत्र तत् सर्वं गतमिति चेत्, तेषां अन्येषां च व्याख्यानकालादौ अस्ति । सर्वत्र यथायथमर्थभेदो ग्राह्यः ।

राजपीडा=पद्मेषु चन्द्रपीडा; यज्ञेषु सोमलतापेषणम्; परत्र राजदण्डः । मणौ त्रासः दोषः ।

पृ. श्लो.

22 ७५ उत्पत्तिवाक्योपदिष्टामिक्षारूपगुणविशिष्टवैश्वदेवक्रियायामुत्पन्न-वाक्योपदिष्टाभिन्नवाजिनगुणनिवेशो नास्तीति मीमांसकोक्तमत्र ग्राह्यम् । धरातनूजः =भौमग्रहः; बुधः =बुधग्रहः पण्डितश्च । चपलानुषङ्गः = विद्युत्सङ्गः विटसङ्गश्च ।

७६ उग्रः = क्रूरः रुद्रश्च । वृत्तं=सच्चरितं छन्दश्च । न्यसनाध्वनीने=न्यासाख्यप्रपत्त्युपायानुष्ठातरि । निष्किञ्चनत्वं=आकिञ्चन्यं (प्रपत्त्यङ्गः) दारिद्र्यम् च । महिलावलग्नं=महिलाङ्गनम् ।

७७ तपःस्थितिव्याघातः = तपोनाशः, ग्रीष्मकालासक्तीश्च । कलहं समृद्धं = कलहंसं ऋद्धं इति अर्थान्तरं । कलिकोपचारं= कलिकया (मुकुलेन) उपचारं; कलि-कोप-चारं इति च छेदः ।

७८ अङ्गपाली=आलिङ्गनम् । अद्वैतवाञ्छां=दृढपरिष्वङ्गासक्तिं, अद्वैतमते आसक्तिं च । मध्वागम=मधु(वसन्त)-आगम-आह्लाद; मध्व-आगम=मध्वमतं (द्वैतं) । विधोः विष्णोः, चन्द्रस्य च । (७४ आरभ्य ७८ पर्यन्तं कुलकम् ) । परिसंख्यालंकारश्च ।

23 ग. जटाटीरमुकुटी = शिवशिरः । अमरतटिनी = सुरगङ्गा अर्णोजं=कमलं । कुहनाभीरकिशोरः = कपटगोपकृष्णः । पाकशासनः = इन्द्रः । परिचर्यापरस्य ब्रह्मवाहनस्य हंसस्य । डिण्डीरखण्डः=फेनः । गोत्राहितः इन्द्रः, तदनुयायी हिमवच्छिखरतुल्य ऐरावतः करटी गजः तस्य । पुठकिनीविटघोटकः = कमलिनीबन्धुसूर्याश्वः ।

७९ महर्षिमस्तकमणेः यस्य विश्वामित्रस्य । व्यत्यस्तनाथां 'अन्यमिन्द्रं करिष्यामि लोको वा स्यादनिन्द्रकः' इति तन्मुनिप्रोक्तश्लोककथाऽनुसन्धेया ।

पृ. श्लो.

24 ८० सदध्वा—सन्मार्गः, आकाशश्च। श्लेषानुप्राणिता उपमा।

गः शेषाञ्चितवृत्ति=शेषस्थं; कामः प्रद्युम्नश्च; जलाशयः समुद्रः, जडाशयश्च। व्यतिरेकानुप्राणिता अतिशयोक्तिः।

८१ पण्डितं मन्यानां मूर्खाणां डम्बरं गर्वं दम्भं च। चण्डरीतिजुषा—खण्डनशैलीशालिन्या। अथ पुण्डरीकाक्षदीक्षितस्य मखवैभवः बहुधा वर्ण्यते।

८२ वारिराशितनया=समुद्रजा लक्ष्मीः। मखांबुजैः = यज्ञात्मकैः कमलैः। आमोदः = आनन्दः सौरभम्। रूपकालंकारः।

८३ अरुणलोचनत्वस्य कारणं अतिशयोक्तिद्वारा सचमत्कारं अत्र वर्ण्यते।

८४ तान्तोऽपि=ग्लानोऽपि।

८५ सूर्योपरागपुण्यकाले जनाः अब्धौ निमज्ज्य मन्त्रान् जपन्तीति प्रसिद्धिर्हि। साऽत्र व्याजोक्त्या निर्दिश्यते।

८६ 'कलुषव्रजं' इति पठितव्यम्। अग्निः सकलजनपापं उपभुंक्ते इति पुराणप्रसिद्धं। धूमभरविजृम्भणं तत्कलुषव्रजोद्वमनतया उत्प्रेक्षितम्।

८७ हव्यवाहः=अग्निः। लोलशिखाकलापे शिरःकम्पोत्प्रेक्षा।

८८ 'दूघृतवर्ष' इति पठितव्यम्। शिखी=वह्निः, मयूरश्च। हेतिकदम्बकम्=ज्वालासमूहः, मयूरपिञ्छश्च। श्लिष्ठपरंपरितं साङ्गरूपकं व्याजोक्ति संवलितमत्र।

९० श्लोकद्वयस्य व्याख्या 'विजयप्रदीपात्' समुद्धृता। "सरसोक्तीति=स कलानिधिः विद्यानिधिः चन्द्रश्चेत्यर्थः; सरसोक्तयः कोमलोक्तयः ता एव सुधाः तासां वर्षः सतां हृदयरूपकुमुदं—विकासेन हर्षेण विकसनेन च भरितं तन्वन् रचयन् सन्नित्यर्थः विरेजे विदिद्युते इत्यर्थः। विपूर्वाद्राजतेः स्वरितेत्वादात्मनेपदं फणां च सप्तानां इत्येवाभ्यासलोपौ श्लेषसंकीर्णरूपकालंकारः।"

प्रबन्धस्य चम्पूरूपस्य प्रकरणविशेषगतस्तबकसंज्ञायाः अन्वर्थता-संपादनाय स्वस्वप्रबन्धादेः क्षीराम्बुराशित्वादिकं प्रतिपादयति कल्पेति-- कल्पिता विरचिता अर्थविततिः पदार्थानां अभीष्टानां विततिः येन सः कश्चन कल्पद्रुः कल्पवृक्षः प्रज्ञायाः भगवद्भक्तिरूपायाः समीचीनज्ञानस्येत्यर्थः । आतश्चोपसर्गे इति स्त्रियामङ् । आतो लोप इत्याकार लोपः, अजाद्यत इति टाप् । सुधावारिधेः क्षीरसागरात् कविवादिसिंहविदुषः — चम्पूप्रबन्धात्मनेति चम्पूरूपेणेत्यर्थः, प्रकृत्यादिभ्य इति तृतीया । जातः संभूतः आम्नायेत्यादि—श्रुतिमकुटगुरुकथारूपमधुझरीमित्यर्थः उद्वहन् अस्य निरुक्तचम्पूप्रबन्धस्य आद्यः प्राथमिकः स्तबकः घट्टविशेषः गुच्छश्च सुमनसां सहृदयानां देवानां च कर्णावतंसस्य श्रोत्रालंकारस्य श्रियं शोभां करोतु । करोतेः संभावनायां लोट् । यद्यप्यवतंसशब्दः कर्णालङ्कारपरः तथापि विशिष्टवाचकानां पदानां पृथग्विशेषणवाचकपदसमवधाने विशेष्यमात्रपरत्वमिति न्यायेन स कीचकैरित्यत्रेव अत्रापि कर्णशब्दः ।

॥ प्रथमस्तबकव्याख्या समाप्ता ॥

## (द्वितीयः स्तबकः)

पृ. श्लो.

27 १ अर्थप्रदः == वस्तुप्रदः; शास्त्रार्थप्रदश्च । पुण्डरीकाक्षदीक्षितस्य सूनुः अनन्तगुरुः ।

ग लब्धवर्णपरिबृढः = पण्डितश्रेष्ठः लब्धानां गृहीतानां वर्णानां अक्षराणां परिपठनं । घोटी=तुरगी । अनवीनगुरुकुञ्जराः = पूर्वाचार्यश्रेष्ठाः ।

२ अनपायवाणी=वेदवाणी । काणादवचोविशेषान्=न्यायशास्त्रं । पातञ्जलिसूक्तिः व्याकरणशास्त्रं । अध्यैष्ट—अधिपूर्वकात् इङ् धातोः लुङ् । अजीगणत्—गण् धातोः लुङ् । अबोधि—बुधेर्णिजि लुङ् । अलब्ध—लभेः लुङ् ।

पृ. श्लो.

28 ३ अनन्तपदपङ्कजं=भगवत्पादकमलं । अनादिसूक्तिच्छटा = वेदवाक्यसमूहः । बम्भरो भ्रमरः । भृङ्गः पङ्कजमरन्दमधुरिमबद्धस्पृहो भवति । उदधिसोदरं=अनवधिं ।

४ पदक्रमः—पादविक्षेपः, पदप्रयोगश्च । अनन्तात्—नारायणात्, अनन्तगुरोश्च ।

६ तस्मै इति पठितव्यम् । राकानिशाकामुकः = पौर्णमासचन्द्रः श्रीरङ्गराजो गुरुः — श्रीमद्भाष्यकारशिष्यस्य वेदान्तोदयनाचार्यस्य पौत्रः । आशा=दिक्, मनोरथश्च ।

७ वादिहंसजलदार्यसोदरी = वादिहंसाम्बुवाहार्यभगिनी श्रीरङ्गराजपुत्री, अनन्तगुरुपत्नी, श्रीवेदान्तदेशिकजननी च ।

29 ८ यतीशानमाहानसिकपौत्रजा यतीशानः श्रीरामानुजः; तस्य माहानसिकः (शिष्यश्च) वेदान्तोदयनाचार्यः, तस्य पौत्रः श्रीरङ्गराजगुरूत्तमः, तस्मात् जाता—तोतारम्बा । आदिपूरुषदैवाज्ञाचोदितेषु = श्रुतिस्मृतिषु; "श्रुतिस्मृतिर्ममैवाज्ञा" इति भगवद्गीतोक्तिरत्र स्मर्तव्या ।

ग कल्लोलिनी=नदी । कमलाकमनः = नारायणः । खुरली= व्यायामाभ्यासभूमिः । प्रपदनपथजंघालपरिषत्=प्रपतिमार्गवेगगामिबृन्दः । मुदिरः = मयूरः । नाथादिमगुरवः = नाथमुनि-यामुनमुनि-रामानुजमुनि प्रभृत्याचार्याः । अन्तकरणरथचरणः = मनश्चक्रवाकः । निगममकुटयुगलवचनानि= संस्कृतद्रमिडमयोभयवेदान्तवचांसि ।

१० चक्षुस्तद्व्यापारौ=चक्षुः (नेत्रं) तद्व्यापारः (दर्शनं) च तौ नित्यं सहस्थितौ । रथपदौ=चक्रवाकदम्पती ।

११ भारतीं इति पठितव्यम् । अन्तरं=अवकाशं ।

पृ. श्लो.

30 ग भुजङ्गशृङ्गी=शेषशैलः। रमानिवासः = श्रीनिवासः। युञ्जानः =योगी। सुगतः = बुद्धः। हिमान्या=हिमसमूहेन। 'युक्त्ये' त्यस्य हन्यमानामित्यत्रान्वयः। अनादिगिरं = वेदवाणीं। तमः = अज्ञानं अन्धकारश्च। धर्मजातपदं धर्मपुत्रधर्मसमूहो-भयार्थकम्। विषमहितेन = विष-महितेन विष-महितेनेति च छेदः। चरमयुगेन = कलियुगेन। वातूलेन=प्रभञ्जनेन। कंचन श्लोकं="सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज। अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥" इति प्रख्यात भगवद्गीतोक्तश्लोकं।

१२ अस्वप्नसुलभः देवानां सुलभः। विरोधाभासः।

१३ पुरोगिरि—उदयाचल। फुटकिनी (कमलवन) सुहृन्मण्डली= सूर्यमण्डली। कौस्तुभरत्नं धरन्तम्।

१४ 'उरःस्थले' इति पठितव्यम्। वक्षसि श्रीवत्साङ्कधारीत्यर्थः।

१६ देहदीधितिकालिन्द्यां सौगन्धिक (कल्हार) मिव सुदर्शनं (चक्रं)

१७ 'कङ्केल्लि' इति पठितव्यम्—अशोकः।

32 ग. मृद्वीका=द्राक्षारस। साध्यावगमनाय व्याप्तिमिव हेतुः— तर्कशास्त्रे प्रसिद्धा एषा सरणिः।

१८ कल्पान्तपाथोधरव्रात—प्रलयकालमेघजाल। उज्जीवयिष्यन्त-मित्यर्थे उज्जोवयन्तमिति वर्तमानसामीप्यं द्योतयति।

२० नारायणक्ष्माभृति=शेषशैले वेङ्कटाद्रौ। दत्तनेत्रकुतुके= जनित-नेत्रकौतूहले।

२१ सीमा शब्दः आकारान्तस्त्रीलिङ्गः। शेमुषीं =प्रज्ञां।

33 २२ निद्रायाः अनुज्ञा=स्वप्नदशा। उत्प्रेक्षा।

ग. असाक्षिकमनुभोक्तुमनुचितं — एकः स्वादु न भुञ्जीतेतिस्मृति-वचनात्। अम्बुरुहकन्दं=विसम्। स्वान्तं=मनः।

पृ. श्लो.

34 २४ अनादिवाणीवत्=वेदवाग्वत्। महं=उत्सवं।
२५ अमृतास्वादनेन मार्गश्रमो मन्दतरो बभूव।
२६ पाकारातिमणिः—इन्द्रनीलः । 'मध्येव्योमनिधि' इत्येकपदं।
२७ अन्तिकस्फुरदिति—अन्तेवास्यर्थसूचकं; यथागुरुः अन्तेवासिनां मुदे स्वभाष्यपद्धतिं आविष्करोति, तथा शेषशैलोऽपि (शेषः= गिरिः, आदिशेषः श्रीभाष्यकारश्च)

35 ग. परभागः = अतिशयः। सिन्धुरः गजः। अहरन्तः—दिनान्तः। 'कैरवनिकरेण' इति पठितव्यम्। बलदमनलोकः इन्द्रलोकः। नन्दनशब्दः पुत्रनन्दनवनोभयार्थकः। मिलिन्दः भ्रमरः।
३० अन्तस्सुखाय—आत्मानुभवैकसुखाय । आत्मैवात्मन्येव वा सुखं यस्य सोऽन्तस्सुखः इति गीतातात्पर्यचन्द्रिका।

36 ३३ सेतुविधायी—रामः; गीताविधायी—कृष्णः।
३५ शराशीविषः — शरसर्पः। सप्तसप्तिः सप्ताश्वः सूर्यः। क्षितिजापहारी—सीतापहारी रावणः। हृदयक्रीडारतमारुतः — प्राणः।
३६ 'मध्येपङ्कज' मित्येकं पदम्। कमलमध्ये।
३७ अर्जुनो वृक्षविशेषः, मध्यमपाण्डवश्च। विरोधाभासः।

37 ३८ कान्ताकरुणया=कान्तायाः लक्ष्म्याः कृपया। लक्ष्मीकटाक्षतो महाराजो भवतीत्यर्थः।
३९ दन्दशूकेन्द्र-शैलः = शेष-शैलः। कुञ्जरेन्द्रोपकारी गजेन्द्रोपकारी।
४० काकोदरेन्द्राचलः = शेषशैलः। वक्षोरूपस्य धाम्नः गृहस्य दीपः कौस्तुभः। वैजयन्ती वन्दनमाला द्वारपुष्पमाला। तत्र धाम्नि विहारभाक् सुहृक् लक्ष्मीः।
४१ सुराभियाति-सुदती=असुर-स्त्री। निरपायसूक्तिवचसां=वेद-गिरां तात्पर्यं इति विशेष्यम्।

पृ. श्लो

38 ४२ वामालकां—ललनाललामभूतां लक्ष्मीं ।

४३ कृत्रिमेतरगिरां मौलिषु=वेदवाचां शिरस्सु वेदान्तेषु । वेतंडेन्द्र-विपद्विमोचनचणं=गजेन्द्ररक्षाचतुरं ।

४४ भोगी=सर्पः भगवांश्च । सर्पो हि वदने मारकविषयुक्तः, अपायकान्तिविद्युद्भीतः, गरुडद्विट् च । अयं भोगी तु वदने स्मितसुधांवहः, अनपायकान्तिरमाविद्युदाश्लेषकारी, गरुड-सुहृच्च । विरोधत्रयमाभासते ।

४५ वात्स्यायनदृष्टमागमं=कामशास्त्रम् ।

४६ सुरभिलकलम्बः = सुगन्धिबाणः मन्मथः ।

39 ग पयोजबन्धुः = सूर्यः । क्षणदायां रात्रौ । प्रथमक्षणावच्छिन्न-घटादितुल्ययोगक्षेमाकाङ्क्षयेव=आद्यक्षणावच्छिन्नघटो निर्गुण इति तार्किकाः; तत्तौल्यलिप्सयेव = गगनमपि निर्गुणमभू-दित्यर्थः । निश्शब्दमभूत् । गगने शब्दाभावेऽपि संख्यापरिणा-मादि सद्भावात् निर्गुणत्वमसंभवीति आकांक्षयेवेत्युक्तम् ।

४७ संविदं=प्रतिज्ञां । वृषाचलधौरेयः = वेङ्कटाचलपतिः ।

ग अकृतकफणितिः=वेदवाक् । 'उत्पलावलीलया' इति पठितव्यम् ।

40 ४८ 'त्रयीशिखर' इत्येकं पदं, वेदान्त इत्यर्थः । 'पुरोगिरिः' पूर्वाचलः । कुमुदिनीसुहृत् चन्द्रः । श्लेषानुप्राणितोपमा ।

४९ परं=केवलं । दुर्मदोऽपि चकम्पे इत्यर्थः । अत्र समुच्चयध्वनिः ।

41 ५२ अलिन्दः = द्वारोपान्तः ।

५४ म्रदिम्ना निरस्तपङ्केरुहयोः = पङ्कजातिशायिमार्दवयोः ।

ग 'उपागच्छः' इति लङि मध्यमैकवचनम् । चरमयुगवावदूकाः =कलिकथकाः कुमतयः ।

पृ. श्लो.

५५ अञ्चितं पूजितं परं ब्रह्मेत्येकोऽर्थः, वृषगिरिवास्तव्यं सर्वकर्मयुक्तं ब्राह्मणमुख्यमवेहीति द्वितीयोऽर्थोऽपि युक्तः गद्यानुसारात् । श्लेषालंकारः ।

ग प्रज्ञाधनमूर्धन्येत्यत्र भिन्नधर्मा पूर्णोपमा ।

42 ५६ 'अत्रभवतः' इत्यविच्छिन्नपदं; आयुष्मत इत्यर्थः ।

५७ श्लेषोपमारूपकाणां सङ्करः ।

५८ निगमप्रायं = त्रयीतनु (सूर्य) सदृशं । निगमपदस्थाने तरणिमिहिरादि पदं वा । अर्थाद्वा सूर्यसादृश्यलाभोऽस्तु । सौम्येति प्राभातिकी सन्ध्या कमनीयतरत्वात् । सा अनन्तगुरु-पत्नी ऐन्द्री दिशेव सन्ध्याञ्जलीन् स्वीकरिष्यति ।

ग 'व्यापारैर्विस्मयं' इति पठितव्यम् ।

43 ६० चक्षुष्यं=दर्शनीयं; चक्षुष्यः सुतो भवतीति च छान्दोग्यम् । चमत्कृताङ्गां—घण्टाविशेषणम् मुक्तामयीं घण्टां इति वक्ष्यति । दिवसव्यपायः = प्रदोषकालः ।

६१ अधिभुवा=भर्त्रा । मुक्तामयी घण्टा ।

६२ भ्रान्तिमदलंकारः

44 ६३ एकस्यैव अनेकत्र अनेकधोल्लेखात् उल्लेखालंकारः ।

६४ हस्ताब्जद्युतिविततिः रक्तवर्णा; विशदमणिघण्टारुचिझरी श्वेत-वर्णा; कुवलयदृशः कटाक्षाणां धारा नीलवर्णा; अभिनवं त्रिवेणी-संयोगं=नूतनं सरस्वती-गङ्गा-यमुनासङ्गमम् । अतिशयोक्तिः ।

६५ सितपाथोजवनी=पुण्डरीकवनं ।

ग विसृज्येत्यस्य आदधानयोरित्यत्रान्वयः । 'मत्वेव' इति हेतूत्प्रेक्षा । नाव्या=नावा तार्या बभूव; ववृधे इति यावत् ।

46 ग तत्प्रसङ्गरूपे पवने । पङ्केरुहवासिनीविलासिनः = लक्ष्मीपतेः श्रीनिवासस्य ।

पृ. श्लो.

47 ग 'अद्भुतमिदमवधानेन' इति पठितव्यं ।

७० आद्येन पुंसा=विष्णुना; विधिवाजिमेधे=ब्रह्मणः अश्वमेधयागे ।

७१ वदावदाः = कथकाः ।

७३ कलशपाथोधिकन्याविटः = लक्ष्मीकान्तः ।

48 ७४ घटा=गजसमूहः । वारिजवासिनीसुहृत्=लक्ष्मीपतिः ।

७५ मिलिन्दः = भ्रमरः । ग खर्वेतर=अधिक ।

७६ उत्कः = उत्कण्ठितः ।

ग सुभगंभावुकः = प्रियकारी । वदनं द्विजराजरूपं चन्द्ररूपं भावयति स्म; भगवांश्च द्विजराजस्य ब्राह्मणस्य रूपम् । शिष्यः आचार्यादिव कृतसांनिध्यात् त्वयीं, घण्टा मध्यात् अदृश्यता-मध्यैष्टेव । मध्यं अतिकृशं अदृश्यम् । तथा घण्टाऽप्यदृश्याऽभू-दित्यर्थः ।

49 ग 'अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन' श्रीमद्रामायणे किष्किन्धाकाण्डे सुग्रीवं प्रति रामस्योक्तिः (स. ८, श्लो. २२) 'द्यौः पतेत्, पृथिवी शीर्येत्' ।

७८ वनितारत्नं=लक्ष्मीं । मञ्जिमानं=शोभां (मञ्जिमन् शब्दः) । व्याकोचाब्जप्रतिमनयनः = विकसितकमलसदृशनेत्रः ।

50 ग चिरंतनफणितिः = वेदः । शारीरकपद्धतिः = ब्रह्मसूत्रशारीरक-मीमांसा । निक्षेपविद्या = प्रपत्तिशास्त्रं । संयमीन्द्रसरस्वती= श्रीरामानुजसूक्तिः । कण्ठगतजीवितः = आसन्नमृत्युः । फणि-गिरिपरिबृढघण्टा=वेङ्कटेश्वरघण्टा ।

51 ८० वार्तंधयशैलधाम्ने=वेङ्कटेश्वराय । कृतिकुञ्जरः = बुधश्रेष्ठः, सुकृतिप्रवर इति वा । ८१. मालोपमा ।

( द्वितीयस्तबकव्याख्या समाप्ता )

## (तृतीयः स्तबकः)

पृ. श्लो.

52 प्रथमश्लोकमारभ्य त्रयोदशपर्यन्तं मनोहारि गर्भवर्णनम् ।

१ अनन्तसूरिपत्नी धृतसत्त्वा गर्भिणी । अकृत्रिमसूक्तिरपि त्रय्यपि धृतसत्त्वा—सत्त्वं सद्भावः ।

२ अभिख्या=कान्तिः । शौरिघण्टा=विष्णुघण्टा ।

३ चूचुकं=कुचाग्रं । गर्भावस्थायां चूचुककाष्ण्यं अतिरिच्यते ।

४ रुचिरदृङ्मणिः = रुचिरदृशां मणिः, तस्याः रोमलतारूपेण ।

५ सुमनोमणिः = चिन्तामणिः, विद्वद्वरश्च । मध्यमस्यापि चिन्तामणिलाभेन पुष्टिस्संजायत इति ध्वनिः । रूपकालंकारः ।

६ अदृश्यं गगनमिति गार्किकाः । मध्यमं तावत् गगनमित्युच्यते अदृश्यत्वाभिसन्धिना । गगनं दृश्यं विवत्तुरर्भकः मध्यममपि दृश्यमकरोत् ।

७ गर्भिणीस्त्रीणां मृद्भक्षणं सूच्यतेऽत्र ।

53 ८ वलीनां वैषम्यं त्रित्वात् । मध्येस्थिता वलित्रयी अपगतेत्यर्थः ।

१० तत्त्वपूर्वं मुक्ताकलापं । तत्त्वमुक्ताकलापः आचार्यग्रन्थः ।

११ हरित्=दिक् । १२. कथाः = वादान् ।

१५ पुंसवनादिकं कर्म = पुंसवनसीमन्तोन्नयनादिसंस्कारान् । शर्मणे=सुखाय । निरपायोक्तिमर्मवेदी=वेदरहस्यवित् ।

54 १६ अह्नामधीशे=सूर्ये । कन्याराशिः = भाद्रपदमासः । विष्णुतारा =श्रवणनक्षत्रम् । ऐन्द्री दिशा प्राची दिक् ।

(१७ आरभ्य २३ पर्यन्तं देशिकावतारमहोत्सवे जगन्मङ्गल-सूचकानि शकुनानि वर्णयति कविकुञ्जरः)

१७ पटवाससचर्चा=चूर्णानुलेपः । हरितां ततिः = दिक्समूहः । कौतुकं=मुदं अलंकारं च ।

पृ. श्लो.

55 २० सुमनसां बृन्दः = विदुषां समूहः। सुमनसां सङ्घैः — देवानां सङ्घैः। सुमनसां पारम्परी=पुष्पाणां वृष्टिरित्यर्थः। 'सुमनस्' शब्दार्थत्रयमपि विवृणोत्यत्र कविः।

ग त्रयीतनुः = सूर्यः। तनुता = कार्श्यं।

२१ लोपामुद्राकुटुम्बिनं=अगस्त्यं। अद्धा=सत्यं। द्रमिडकलया= द्राविडभाषया। नियमैः = छन्दोमयैः कृतिभिः। मम विरोधिनं अगस्त्यं एषः विजेष्यतीति तुष्टिरम्बुधेः।

२२ शाखानां=वेदशाखानां। अदभ्रं=बहु। प्राकाशि—प्रकाशतेः कर्मणि लुङ्।

56 ग अनन्तसरसि—देवाधिराजदेवालयान्तर्गतपुष्करिण्यां। अभ्यर्ण-सीमानं=उचितं सामीप्यं।

२५ मधुमासजन्मा किशोरो मरुत्—वासन्तिकः मन्दमारुतः जपाकुसुमम्।

२६ रुचां परिबृढः = सूर्यः। कुहूमुखयुवा=कोकिलः। माधवः = वसन्तकालः। जातकर्मोत्सवसंस्कारं कृतवान्।

२७ सुवर्णगोकुलं = सुवर्णसहितं धेनुबृन्दं, (सु-वर्ण-गोकुलं) शोभनाक्षरं वाङ्मयञ्च।

57 २८ अरिष्टं=अमङ्गलं। उभयमभिभूतमभूत्।

ग तनयस्य 'वेङ्कटनाथ' इति नाम चकार। शम्पा—विद्युत्। कैतकं—केतककुसुमं।

२९ पयोपेक्षया—सूक्तीनां स्वाद्यता।

३० सृक्कयुगलेन—ओष्ठस्य वामदक्षिणप्रान्ताभ्यां।

58 ३३ तल्लज=श्रेष्ठ (प्रशस्तवाचकशब्दः)

३४ ललन्तिका—हारः (मौक्तिकमाला)

पृ. श्लो.

३५ अस्मिन् संभृतसंनिवेशे उत्थानार्थप्रयत्नशालिनि सति वेदोऽप्युदतिष्ठत्। अस्मिन् सञ्चाराय उत्थिते, सनातनोक्तिरपि सर्वत्र संचारं व्यतानीदित्यर्थः।

३६ कुदृक्षु कुत्सिता दृक् येषां तेषु। तद्वाचकप्राथमिकांशः — कुदृक्-पदघटकः 'कु शब्दः' तद्वाच्ये भूतले इत्यर्थः।

59 ३७ पदं = चरणं, सुप् तिङन्तं च। विवक्षति = बोढुमिच्छति, वक्तुमिच्छति च।

ग अन्येन रजसा = रजोगुणेन। ध्वनिना व्यङ्ग्यार्थेन। वादिहंसवारिदः — अप्पुल्लार् इत्यपरनामकः रामानुजो वेङ्कटनाथमातुलः। वरददेशिकः — 'नडादूर अम्माल्' इति ख्यातः वादिहंसांबुवाहस्य आचार्यः।

३८ अनणयसीं—महीयसीं।

३९ अगारं = भवनं।

60 ४० 'वाचाव्याकृत' इत्यविच्छिन्नपदं। तृतीयान्तं वा। विद्यावारिधिनाविकाः = विद्यासागरपारकारिणः।

ग विनतनिकरः = शिष्यबृन्दः। पटीरतरुनिवहः चन्दनवृक्षसमूहः।

62 ४५ वेदप्रोक्तं 'शतायुः पुरुषः' इति वचनमनुरुध्य आयुष्यार्थमाशीर्वचनम्।

४६ श्रीभाष्यकारसिद्धान्तप्रवर्तकानां कृपापात्रं भूयादित्याशीः।

४७ तार्किकान् वादे विजित्य जीयादित्याशीर्वादः।

63 ग वादि-सितगरुद-म्बुधरः = वादिहंसाम्बुवाहः मातुलः रामानुजः। मङ्गलाशासने अनुसन्धीयते खलु "श्रीरामानुजार्यादात्रेयान्मातुलात्सकलाः कलाः। अवाप विंशत्यब्दे यः तस्मै प्राज्ञाय मङ्गलम्॥" इति। परिणाहः — विशालता।

४८ वेष्टने = वेदपदानां समस्तपदस्यावयवविभजने।

पृ. श्लो.

४९ वेदप्रकरः = चत्वारो वेदाः। फणिफणितिः = व्याकरणम्। कणचरणविद्या = वैशेषिकदर्शनम्। यतिनृपतिवाणी=श्रीमद्रामानुजसूक्तिः। नरः बाल्ये क्षीरमुदितः, कौमारे प्रथमं वीथिसंचारी पश्चात् विद्यापरिचयशाली, यौवने परिणयं च वितनुते इति सूच्यते।

५० कारुण्यमेव उचितः मारुतः; गुरूपदेश एव तरणिः, विद्याः वारिनिधयः, पाण्डित्यं मुक्ताफलं, श्रीरामानुजसूक्तिधारा वधूरित्यारोपात् साङ्गपरंपरितरूपकम्।

ग तदानीं किलेत्यत्र—एकस्यैव अनेकत्र बहुधोल्लेखात् उल्लेखालंकारः। कलशीसुतः = अगस्त्यः।

64 ५४ अभ्यर्हितां वासनामातन्वद्भिः = समीचीनसंस्कारोद्भवैः।

65 ५५ कैङ्कर्यलक्ष्मीसंपत्तिविषये समाधिकदरिद्रताविरोधिराहित्यश्चासीत्। निरन्तरायनिरतिशयकैङ्कर्यसाम्राज्यसंपन्न इत्यर्थः।

५६ फणीन्द्रसरसि=अनन्तसरसि। प्रज्ञाबोधनमागधम्—मागधाः स्तुतिपाठकाः यथा निद्राणं प्रतिबोधयन्ति, तथा प्रज्ञां प्रतिबोधयति हयग्रीवमन्त्रः।

५७ अलमकरोत्=भूषितवान्। मनीषायां वध्वारोपो व्यङ्ग्यः। रूपकम्।

66 ५८ वदने वाजी देवः = हयग्रीवः। चक्षुर्गोचरतामुपेत्य=प्रत्यक्षीभूय।

५९ प्रभया कान्त्या प्रतिभया च। गुणेन औन्नत्यादिना च।

६१ अर्वपर्वशर्वरीपतिः हयग्रीव-चन्द्रः। कुदृष्टिगर्वान्धकारं पराकरोत् साङ्गपरंपरितरूपकम्।

६२ लवित्रेण=दात्रेण। मन्दुरा = तुरगशाला। पूर्ववत् रूपकम्।

67 ६३ शाक्योक्तिशैली=बौद्धमतपद्धतिः विलीना। गुरुमतं—प्राभाकरमीमांसकमतम्। श्लिष्टपरंपरितरूपकम्।

पृ. श्लो.

६४ गौः धेनुः वाक् च। चरन्ती = संचारं कुर्वती, भक्षयन्ती।

ग अकृतकफणितिपथाध्वन्यः = वैदिकः। माधवः = वैशाखमासः, श्रीपतिश्च।

68 ग कतकं = अम्बुप्रसादकं कतकवृक्षफलम्।

६६ यशसः विशालतमत्वं सर्वव्यापित्वं अनया प्रक्रियया दर्शितम्।

ग पवनोदरम्भरपरिबृढः आदिशेषः तद्वचः श्रीभाष्यमहाभाष्यादि। अम्बुरुहलोचनपुरंध्रिका = लक्ष्मीः। विभुतोपायताप्रभृति=विभुत्व-उपायत्वादि। करणानि इन्द्रियाण्येव मदकलभाः।

69 ग वाराकरः वारांनिधिः। पूर्वमीमांसायां पौर्णमास्यधिकरणमेकम्। तत्र 'य एवं विद्वान्' इति विद्वद्वाक्यार्थविचारः। आग्नेयादि-त्रिकरूपसमुदायप्रसिद्धिप्रदर्शनायेदं वाक्यम्। न तु किञ्चिद्वि-धायकमिति तत्रोक्तम्।

71 ग सुकीर्तिः = वैनतेयपत्नी यशश्च। मित्रमण्डलं = सूर्यमण्डलं सुहृत्संघश्च। गोवर्धनः = गिरिविशेषः वाग्वृद्धिहेतुश्च। शतानन्दः जनकपुरोहितः। पंक्तिरथः दशरथः — तस्य विजयः अर्थसाधकः सुमन्त्रः सिद्धार्थ इति मन्त्रिणः। नरेन्द्रः सर्पग्राही राजा च। तिस्र एव साह्नस्योपसदः द्वादशाहीनस्येतिवाक्य-मादाय मीमांसायामहीनपदविचारेण अहर्गणरूपकर्मविशेष-गामित्वं द्वादशोपसत्संघस्योक्तम्। अर्थान्तरे तु सर्वं कालं श्रेष्ठश्रुतिचिन्तयैव नयतीति।

६८ 'वचोदुग्धजलधे' इत्यविच्छिन्नपदं। घूकाः उलूकाः।

६९ यशसि चन्द्रारोपः। रूपकम्।

72 ग सत्पथात् साधुमार्गात् नक्षत्रपथाच्च। विप्रयुक्तवृत्तिविरोधं विप्राणां युक्ता या वृत्तिः तद्विरोधं, वियोगिनां वृत्तिविरोधञ्च।

पृ. श्लो.

चपलानुषङ्गः विद्युत्सङ्गश्च । परमं हंसपराभवं, परमहंस (यति) पराभवं । समयेषु कालेषु सिद्धान्तेषु च रुचिः प्रीतिः कान्तिश्च । क्षमाभृत् गिरिः क्षमावांश्च । हरिर्विष्णुरिन्द्रश्च । क्रमो न्यायः पदविन्यासश्च । मधुपाः विटाः भ्रमराश्च । जिह्मगः कुटिलः सर्पश्च । शुचिरित्यग्निनाम भुवनं लोको जलं च । पूर्वविबुधाः प्राच्या विद्वांसः असुराश्च । भवो रुद्रः संसारश्च । भ्रमः भ्रान्तिः आवर्तश्च । कामः अनुरागः प्रद्युम्नश्च । दोषाकरः दुष्टः चन्द्रश्च । नाभौ जातः अभिजातो नेति च । रुद्रः शिवः, रुद्रा गरुडपत्नी ।

73 ७० मरुत्वतः इन्द्रस्य; मदावलः ऐरावतः । भाष्यकृत् फणी = महाभाष्यकृत् आदिशेषः । उपमालंकारः ।

॥ तृतीयस्तबकव्याख्या समाप्ता ॥

## (चतुर्थस्तबकः)

74 ग परपुष्टयुवा = कोकिलः । मौहूर्तिकः = ज्यौतिषिकः । सौखशायनिकः = सुखशयनपृच्छकः । वैहासिकः विदूषकः । कामसंघट्टनमित्येकं पदं । माधवमासे कमलानि विलसन्ति । माधवः रमाधवः कमलायाः लक्ष्म्याः तत आनुकूल्यम् । अखिलागमपरिष्कारः अखिल-अगम(वृक्ष)-अलंकारः, अन्यत्र अखिल-आगम (वेद) भूषणं च ।

75 १ वसन्तश्रीकृतां आरत्रिकादिसेवां वर्णयति कविः ।

२ शाटीं यवनिकां । चित्तेशयः कामः परमात्मा च । किसलयश्रेणय एव कराः । भावावेशान्नर्तनम् ।

३ 'कांक्षां' इति पठितव्यम् । विजहत् इति निवहविशेषणम् । कङ्केल्लि = अशोकवृक्षः । यतेरिवात्र चञ्चरीकबृन्दस्य माधवभजनम् ।

पृ. श्लो.

४ उत्तरदिगाश्रयणम् वायोः मलयानिलत्वं सूच्यते ।

76 ५ पवने चोरत्वारोपः, भृङ्गावल्यां च शृंखलात्वारोपः ।

ग अत्र गद्ये पूर्वपदान्तवर्णाभ्यां अपर-पदारम्भात् संदंशयमकम् ।

६ द्विजः पक्षी, ब्राह्मणश्च । पल्लवेषु अपूपारोपः व्यङ्ग्यः ।

७ काननकैतवे—काननमिति व्यपदेशमात्रं जलनिधिरेवायम् । कैतवं = व्याजः । पलाशकुसुमदलेषु ज्वालासमूहारोपः । वृन्तकार्ष्ण्ये च धूमांकुरत्वारोपः । रूपकालंकारः ।

77 ८ दीप-जलसेचन-रङ्गवल्ल्यादिभिः शोभितां शालामिवेत्यर्थः । उद्यानमेव शाला । रङ्गवल्ली—चूर्णक्रियमाण स्थलालंकाररेखाः । हृदयभवविभोः मन्मथस्य । रूपकम् ।

९ वारणाद्रिविहारिणः हस्तिशैलस्थवरदराजस्य ।

ग शर्वरीविटः चन्द्रः । कनदर्णोजं प्रकाशमानकमलं । ऊर्मिकः = अंगुलीयाभरणं ऊर्मिश्च । कङ्कणं इन्द्रधनुस् कौतुकाभरणं च ।

78 १० नीरधिजाविलासी—लक्ष्मीपतिः ।

१२ सासहिः सहनशीलः, असासहिः असहनः ।

१३ निजतनुद्युतिरेव सूर्यसुता (यमुना) तस्याः तटद्वयोद्भवशरकाण्ड-समूहसदृशीम् ।

१४ 'बद्ध्वा' 'विशदातपत्र' इति पठितव्यम् ।रोहिणीरमणः चन्द्रः । सदृशः इति षष्ठ्यन्तं वदनाम्भोजविशेषणम् । उत्प्रेक्षा ।

१५ जनस्तोमे जलध्यारोपात् हेतूत्प्रेक्षानुप्राणितरूपकम् ।

१६ काञ्चीपुर्या भूरजोद्वारा सखीभूतायै अमरावत्यै उत्सवसूचन-मुत्प्रेक्षितम् ।

१७ सेवाहेवाकि—सेवारत । जलधरपदवी—आकाशः । व्याघट्टनेन संघर्षणेन । पारिजातकुसुमेषु तारकारोपः । उत्प्रेक्षानुप्राणित-रूपकम् ।

पृ. श्लो.

80 १८ निजाश्रये — शब्दाश्रये आकाशे। विश्वबन्धौ—वरदाधिराजे।
१९ श्रुतयः श्रोत्राणि वेदाश्च। जलराशिः समुद्रः जडसंघश्च।
२० लोकव्रजे वारिराश्यारोपः। तदुद्भूतफेनपरंपरया मुक्तातपत्रावलेरौपम्यम्।
२३ स्थलरथाः मण्डपाः।

81 २९ मृगनाभिः = कस्तूरिका। अदस्त्विषां=मृगमदरुचाम्।
३० तमः = अन्धकारः, अज्ञानं च। सुमनसः = पुष्पाणि, सन्तश्च। वासना=गन्धः, भावना च। मुक्तिः = बन्धविस्रंसनं, मोक्षश्च। शफरीदृशः = मीनाक्ष्याः।

82 ३१ हंसकः पादकटकः। पङ्कजे हंसस्थितिर्युक्ता। पल्लवो हस्तभूषणम्। अंघ्रौ पल्लवस्य स्थितिः युक्तिमेदुरैव।
३२ कण्ठदघ्नः = कण्ठपरिमाणं। विधोः = भगवतः।
३४ अवतंसः = कर्णावतंसः। अधरितश्रुतिः = श्रोत्रोपरिस्थितः, उल्लंघितवेदश्च। मधुपेन=भ्रमरेण, मद्यपेन च। पतितः = स्खलितः अनर्हश्च।

83 ३५ मुक्ताललन्तीं=मुक्ताहारं। तादृक् परिष्क्रिया=हारालंकारः।
३६ काञ्चीपुर्यां गुणप्रदः वरदः। काञ्ची मेखला च।
३७ सैंहिकेये = सिंहिकापुत्रे (राहौ)। कचसंहतिरेव राहुः। भूभृत्=पर्वतः राजा च। उपरागकाले रत्नदानं कुर्वन्तीति प्रसिद्धिः।
३८ वेलाविलंघि=समयातिक्रमेण। कचसंहतौ च्युतस्रजि सत्यां तस्याः कान्तायाः नखकान्तिः पुष्पशोभामतनोत्।
३९ सवर्णे उत्पलवर्णे। पदे पदे प्रतिपदं।
४० व्रजयुवतिदुकूलहारिणः अस्मात् भगवतः (कृष्णावतारे गोपिकावस्त्रापहारी खलु)

पृ. श्लो.

84 ४१-४२ 'हारावलीमरीचि' इत्येकं पदं । युग्मकं श्लोकद्वयमिदम् । प्रसवबाणः = मन्मथः । निखिलपौरकान्ताजनविशेषणानि त्रीणि पुल्लिङ्गप्रथमैकवचनान्तानि ।

ग सेन्दिन्दिराः = सभ्रमराः, कटाक्षकालिमापेक्षया ।

85 ४३ पाटीरपङ्कः = चान्दनपङ्कः । ४४-४७ मनोहारि विटवर्णनम् । ४५ विशेषकं = तिलकम् । ४७ श्रीसमेतं रुचिरमुखं पुण्डरीकाक्षं भगवन्तमिष्टसिद्ध्यै पश्येति विवक्षितार्थः । सुषमायुक्तं जलजनेत्रं कान्तस्य मे आननं कामसिद्ध्यै पश्येति प्रतीयमानार्थं पश्चात् बुद्ध्वा लज्जया अवनतानना आसीत् ।

86 ४८-४९-५० अन्ये भगवन्तमन्वगच्छन्नित्यत्र श्लोकत्रयस्याप्यन्वयः । ४९ नालीकविलोचनस्य नामानि = नारायणनामानि, मुक्तेः मूलानि मोक्षसाधकानि ।

५२ निखिलागमालंकारस्य कर्णाभरणत्वं प्राप्य अवतंसपुष्पस्य हर्षान्नर्तनं उत्प्रेक्ष्यते ।

87 ५३ हारकम्पने अहिभ्रमेण स्वजिघृक्षाशङ्का हेतुत्वेनोत्प्रेक्ष्यते ।

ग आपीठमामौलि = आपादचूडं ।

५४ पतङ्गः = गरुडः सूर्यश्च । उभयोः त्रयीमयत्वं प्रसिद्धम् । नेत्रनिर्निमेषत्वे गरुडदर्शनं, अम्भोजनिर्निमेषत्वे सूर्यदर्शनम् ।

ग सर्वतोमुखः = ब्रह्मा । कविकथककेसरिगुरुः = कवितार्किकसिंहः वेङ्कटनाथः ।

"तुरगविहगराजस्यन्दनान्दोलिकादिष्वधिकमधिकमन्यामात्मशोभां दधानम् । अनवधिकविभूतिं हस्तिशैलेश्वरं त्वां अनुदिनमनिमेषैर्लोचनैर्निर्विशेयम् ॥ इति श्लोकः वरदराजमधिकृत्य कृतपञ्चाशच्छ्लोकेष्वेकः ।

पृ. श्लो.

88 ५५ 'जाया' कान्ता' पदाभ्यां सपत्नीभावः सूचितः। रूपकम्।

ग दन्तावलः =गजः। अक्षिपथाध्वनीनं=प्रत्यक्षं। वचसामगोचरं किमपि कुतूहलं यथा मुक्तौ भवति, तथैव अत्र यात्रोत्सवेऽपि समजनीति मुक्तेः पौनरुक्त्यं।

89 ५८ पादादियमकम्। सिन्धुराचलः = हस्तिगिरिः

90 ग कथकजनमूर्धन्यः = तार्किकशिरोमणिः। सामान्यदर्शनं भ्रान्तिमुत्पादयति, विशेषदर्शनं तु तामपोहति। वासतेयी= रात्रिः। प्रालेयं=हिमं। प्रपदनं=उपायः प्रपत्तिः। जीवपरयो-रभेदवाद इत्यादयः — प्रायेण शतदूषणीवादानां निर्देश इह। प्रतिक्षिप्तं लक्षणं स्वरूपं यस्याः तस्याम्। पयोजलोचनपारम्यं =विष्णुपरत्वं। सिद्धान्तेषु=सिद्धः निष्पन्नः अन्तः नाशः येषां तेषु। शतदूषण्यां लुप्ता वादाः नूनमीदृशविषयाः स्युः (अथवा परमतभङ्गादिकमभिप्रेतम्)।

91 ग ग्रीष्मवर्णनम्—अहन्तोदयः गर्वोदयः। अम्बरमणिः = सूर्यः। वैजननः = प्रसवमासः।

६२ वनप्रियः = कोकिलः। निदानं=कारणं।

92 ६३ 'शीतकाले भवेदुष्णा उष्णकाले च शीतता।
कूपोदकं वटच्छाया श्यामा च वरवर्णिनी॥'
इति श्लोकोक्तिमनुसृत्य ग्रीष्मकाले कमलाक्षीणां वक्षोजाग्रे शीततां वर्णयत्यत्र कविः।

ग जलक्रीडावर्णनम्। पदानि च अन्तादीनि संदंशयमकानुकूलानि।

६४ हारतुषारधाम्नि = हारचन्द्रे। कुचकोकयुगी=स्तनचक्रवाक-युग्मं। शत्रुनिरासे को वा कुतूहलं प्राप्य न नृत्यति?।

६५ त्रय्यन्तार्थः = वेदान्तार्थः, स एव स्वादु माध्वीकं, तस्य वर्षैः। बुधतापापनोदनं अवर्णनीयहर्षजननं च।

पृ. श्लो.

93 ग वर्षर्तुवर्णनम्—चरमेतरहरित्=प्राची दिक् । बम्भर=भ्रमर। असमशरः = मन्मथः । आमुक्तः = धृतः । सान्दृष्टिकः = नयनसुखदः । सौविदल्लः = कञ्चुकी । निगडः =बन्धशृंखला। घनागमे निशीथारोपो नीरजाक्षीषु निद्रारोपहेतुकः । नास्तिको नालीकवनानामिति — कमलवनानामस्तित्वं विलोपयतीति घनागमस्य नास्तिकत्वं । अचिररुचिपावकः = वैद्युतोऽग्निः । अर्जुनः = पाण्डवः वृक्षश्च । कबन्धः = राक्षसः, मेघो जलबन्धो वा । मेघनादभेदः = इन्द्रजिद्वधः मेघस्य नानाविध-नादश्च । शिखी=अग्निः मयूरश्च । करकः पात्रं वर्षाश्म च । वाहिनी=सेना प्रवाहश्च । रजः रजोगुणः धूलिश्च । वनागमः = वनवृक्षः ।

94 ६६ दिव्यामृतं = सुधा जलं च । मरुत्कदम्बाः = देवगणाः पवनसमूहाश्च । श्लेषानुप्राणितं रूपकम् ।

६७ समन्मथेन समयेन=घनागमकालेन बलाहकाः मेघाः विला-सिनीचिकुराः प्रतिभान्ति स्म ।

६८ गर्भिण्यः सूर्योपरागसमये गृहान्तर्निलीयन्त इति प्रसिद्धिः । कविस्तु तदुक्तिमाश्रित्य, जलदराहुणा सूर्यमण्डलं स्पृश्यत इति भ्रमरकुलगर्भवत्यः पद्मिन्यः जलान्तर्निलीनाः इति उत्प्रेक्षते ।

६९ कालिका=मेघपङ्क्तिः । तरणिः = नौः । मेघपङ्क्तिरूपा नौः सविद्युत्पताका घनागमसमयरूपनाविकेन प्रच्छन्नदिनरत्ने गगनसागरे विमुक्ता विरेजे । रूपकम् ।

७० स्फुरन्त्यां विद्युति नृत्यन्त्याः तस्याः समारोपः इन्द्रकोप (रक्त-वर्णकीट) समूहे अलक्तद्रवसमोरापकारणम् । तच्चात्र जनैः तथा शङ्कितमिति उत्प्रेक्ष्यते ।

पृ. श्लो.

७१ गगनमेव वटतरुः । पयोदपङ्क्तिः तच्छाखा । इन्द्रकोपाः फलानि । गम्भीरवाताहतशाखा फलानि दिक्षु विकिरत्येव ।

७२ विषं जलं गरलं च । सर्पान्नर्तयते आहितुण्डिकाय राजानः पीताम्बराणि उपहरन्ति इति प्रसिद्धार्थः इह वारिदनर्तयित्रे अनिलाय घनागमकालकृते कदम्बधूलिदाने उत्प्रेक्षितः ।

७३ मलयजं=चन्दनं । सरस्वन्तं=समुद्रं ।

95 ७४ जलधरेषु कल्लोलानां, तटिति विद्रुमस्य, नभसि च समुद्रस्य समारोपः बलाकानां नवजलजशोभाधारणे हेतुरिति रूपकानुप्राणिता निदर्शना ।

७५ चञ्चला=विद्युत्, सैव आभरणं । पयोधरः = मेघः कुचश्च । श्यामा=तमोमिश्रतया श्यामवर्णा, षोडशवर्षीया च । अत्र आखण्डलरविशब्दाभ्यां परदारपरामर्शरूपो व्यवहारः प्रतीयत इति समासोक्तिः ।

७६ अनेहसि=काले । दिविषदामुत्करैः =देवसमूहैः ।

(चतुर्थस्तबकव्याख्या समाप्ता)

## (पञ्चमस्तबकः)

96 ग कन्तुः = मन्मथः । मधुसमयपक्षे—मधुर-सघन-पुष्पजुट् ; सरस्सहस्रपक्षे—मधु-रस-घन-पुष्पजुट् इति पदच्छेदः । निर्जरपथपक्षे—राजा चन्द्रः, हंसः सूर्यः । अन्यपक्षे—राजहंसाः मरालाः । शराग्रपक्षे—शितस्य भावः शैत्यं, तैक्ष्ण्यं । अपरत्र तु—शीतस्य भावः शैत्यं । मानसमदकारिणा—मनोमोदजनकेन मानसमदहारिणा — मानसगर्वहारिणा । पश्यदलिकः शिवः, ललाटे नयनवत्वात् । सन्ततेति—अत्र शाश्वतविरोधिनामपि विरोधं विहाय परस्परस्नेहाविष्करणम् गजसिंहयोः मयूरसर्पयोः

पृ. श्लो.

वानरवृक्षयोश्च मिथः प्रीतिः प्रस्तूयते । अनुवादादिशब्दाः सदृशार्थबोधकाः । सन्तानः कल्पवृक्षविशेषः, सन्ततिश्च । अहर्मुखं प्रभातं । जगच्चक्षुः, सूर्यः ईश्वरश्च ।

वंशः कुलं वेणुश्च । खड्गः असिः वन्यपशुविशेषश्च । पुण्डरीकं कमलं, पुण्डरीकः व्याघ्रः । सव्यसाची = अर्जुनः । कृष्णसारः कृष्णबलं, कृष्णसारो नाम हरिणश्च । हर्यक्षं विष्णुहृषीकं सिंहश्च । ऋक्षः तारका भल्लूकश्च । पन्नगाशनः गरुडः । वनमाला वैजयन्ती, वनसमूहश्च । सुग्रीवपक्षे गज-गवय-शरभाः वानरश्रेष्ठाः, वनपक्षे मृगविशेषाः । गुहः गुहा च । वर्णी ब्रह्मचारी । मेखला मौर्वी पर्वततटप्रदेशश्च । नीहारकरः चन्द्रः; नीललोहितः शिवः; पर्वतपक्षे नीलानि लोहितानि च शिरोरत्नानि यस्य शतमन्युः इन्द्रः शतकोपः । अञ्जनाचलं वेङ्कटाचलं ।

98 ३ अनन्तः भगवान् । हरिदन्तः दिगन्तः हरितवर्णान्त्यश्च । विषस्रोतः जलप्रवाहः गरलप्रवाहश्च । महिमा औन्नत्यं माहात्म्यं च । व्याकृतिः प्रकाशनं व्याकरणं च । फणिपरिबृढः आदिशेषः ।

४ गजता गजसमूहः । असंबन्धे संबन्धरूपा अतिशयोक्तिरियम् ।

६ शारदानां जलधराणां एतद्गिरिसंपर्कात् इन्द्रमणिकिरणप्रभाजातं नीलत्वं मयूराणां वार्षिकवारिदभ्रममुत्पाद्य केकारवं जनयति इति तद्गुणालंकारः ।

ग उदकण्ठि उत्पूर्वकस्य कण्ठेः कर्मणि लुङ्; अभिलषितमित्यर्थः । प्राक्तनैः कृतिभिः–कुलशेखर (आल्वार्) प्रभृतिभिः नित्यसूरिभिः स्वकीयद्रमिडप्रबन्धेषु प्रोक्तरीत्या; दयाशतकेऽपि, 'प्राजापत्यप्रभृतिविभवं प्रेक्ष्य पर्यायदुःखं जन्माकांक्षन् वृषगिरिवने जग्मुषां

पृ. श्लो.

तस्थुषां वा । आशासानाः कतिचन विभोः त्वत्परिष्वङ्गधन्यैः अङ्गीकारं क्षणमपि दये हार्दतुङ्गैरपाङ्गैः ॥' (४२ तमः श्लोकः)

100 ७ 'प्रतिवादितमोरवि' रित्येकं पदम् ।

ग मृडानीपरिबृढः = शिवः । विश्वव्यामोह एव फणधरः । प्रणमतामघनिवह एव पयोधिः । प्रबोध एव जलजं । कण्ठीरवमहीभृतः सिंहाद्रेः । विधुन्तुदः राहुः । माधवः वसन्तः विष्णुश्च । निरञ्जनगिरि वेदवाचि । आदिमं पूरुषं आदिपुरुषं श्रीनिवासम् ।

104 ६ शाखा वेदशाखा विटपश्च । अञ्चितः पूजितः युक्तश्च ।

१० 'विशेषात्' इति पठितव्यम् । विधुः विष्णुः चन्द्रश्च । आनन्दपयः हर्षाश्रु । चन्द्रसन्निधाने अब्जस्य विकसनम् मरन्दमोचनं चेति महच्चित्रम् ।

ग वेङ्कटाचलपतेः श्रीनिवासस्य दयामधिकृत्य प्रणीतं 'दयाशतकम्' नाम स्तोत्रम् ।

१२ असमं अनुपमम् । महः उत्सवः ।

105 १५ अनिदंपूर्ववचःशिखासुधा= वेदान्तामृतम् । बोधवारिधिः = प्रज्ञासागरः ।

ग तथागताः बुद्धाः । पाराशर्यः व्यासः । उल्लेखालंकारः ।

106 १७ शान्ति, भक्ति, विरक्ति, क्षान्ति, करुणादिकल्याणगुणगणानामाकरः आचार्यवर्यः ।

१८ त्विषामीश्वरः देवः सूर्यः । २१ विद्याविपिनयतिः विद्यारण्यः ।

107 २३ बलशासनः बलजित् इन्द्रः । २४ 'अन्तःस्वान्त' मिति पठितव्यम् ।

108 ग 'सिलं किमनलं भवेदि' त्यादिकान्—वैराग्यपञ्चकं नाम स्तोत्रम् (164 पृष्टे मुद्रितमस्ति) ।

३१ शुद्धान्तसिद्धान्तं=विशिष्टाद्वैतं मतं ।

पृ. श्लो.

109 ग पारीन्द्रः सिंहः। शालीपालनतत्पराः क्षेत्रपालिकाः। शातोदरी स्त्री (कृशमध्या)। पुष्पवदुद्यानं पुष्पनिर्भरमुपवनम् सूर्याचन्द्रमसोः आकाशे गमनञ्च। भुवनकालुष्यं-जगत्पापं, जलमालिन्यञ्च।

110 ३३ पुरुषोत्तमपूर्वपुण्यदेशाः जगन्नाथादिदिव्यदेशाः।

111 ४६ व्यालः सर्पः। शिखावलः मयूरः। सत्त्वगुणात्मनां हंसानां कासारः। प्रलम्बः प्रलम्बासुरः। तालाङ्कः बलरामः।

112 ग जीवब्रह्मणो भेदः करबदरवत् सुस्पष्टः। अभेदश्च गगन-कुसुमवत् असंभूतः।

113 ग कलशीतनयककुभः = दक्षिणादिशः। अचलकन्यकाकमनः = शिवः। पतङ्गराजतरङ्गिणी (विहगवरसरित्) नाम्ना गरुडनदी।

114 ५३ हरिं=भगवन्तं सूर्यं च। ५५ विबुधपतिं देवनायकं।

ग कलशभवभाषात्मकान् = द्रामिडीयान् प्रबन्धान्। हयग्रीव-स्तोत्रम् ३३ श्लोकात्मकं। देवनायकस्तुतिः ३३ श्लोकात्मका। महावीरगद्यं रघुवीरगद्यम्। ५६ आनने तुरगं देवं=हयग्रीवम्।

115 ५७ अन्तर्मुखहृत् = योगिहृदयं; अन्तर्मुखं — वाह्यवस्तुपरिहारेण परमात्मविषयकतया प्रवेशयुक्तं चित्तादि। चिरत्नं किटिं= पुराणवराहं।

ग अल्पश्रुतेति पठितव्यम्—'बिभेत्यल्पश्रुतात् वेदो मामयं प्रतरिष्यति' इति वचनात्। अभ्रमुकमनः ऐरावतः। आदिमं कोलं श्रीवराहम्।

116 ५८ क्ष्माभृतं=पर्वतं, धरणीधरं वराहं च। वातात्मपक्षश्रियं— आत्मपक्षाः, स्वगरुतः भक्ताश्च। सितद्युतिः = चन्द्रः, शुभ्र-कान्तिश्च। पद्मोल्लासः =कमलविलासः लक्ष्मीहर्षश्च। सविता =सूर्यः जगज्जनकश्च। अनपायं व्योम=परमपदं। एतादृश-दर्शनं पुण्यसंचयेनैव संभवति।

पृ. श्लो.

५६ जलरुहलता—सरोरुहलता—लक्ष्मीः । जीवंजीवः चकोरः ।

117-119 ग चोलवरवर्णिनी चोलदेशस्त्री जलनीलिका शैवलः । अन्तरीपं = द्वीपः (वारिणोन्तर्मध्ये यत् तटं, तत् द्वीपः) । अर्यमघोटः सूर्याश्वः । द्विजपरिवर्तनं—सावित्रीपक्षे त्रैवर्णिकानां द्विजत्वकरणं, वनपक्षे पक्षिसंचारः । सुमनोगणः बुधगणः पुष्पसमूहश्च । अधिकरणं='विषयो विषयश्चैव पूर्वपक्षस्तथोत्तरं । निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम् ॥' सहस्रमधिकरणानि पूर्वमीमांसायामिति प्रसिद्धिः । वनपक्षे अधिकरणं स्थानं । असमशरो मन्मथः । शराः काशाः । वासरान्तवारिदः सायंकालमेघः रक्तो भवति, वनं तु पाटलकुसुमश्रीशोभितम् । केसरः किंजल्कः, केसरवृक्षश्च । पलाशः राक्षसः, वृक्षविशेषश्च । कदलिका, पताका कदलीवृक्षश्च । प्रपञ्चितं रसालं बाणासनं धनुः येन । रसालाः आम्रवृक्षाः, बाणाः नीलझिंट्यः, असनवृक्षाश्च । जपः जपाकुसुमं च । खण्डपरशुः शिवः । खर्जूरनगः रजतगिरिः हिमवत्पर्वतः खर्जूरवृक्षश्च । काश्यपी भूमिः । कनकशिखरी सुमेरुपर्वतः धत्तूरवृक्षश्च । जातिः ब्राह्मणादिः जातिकुसुमंच । शुकः शुकदेवः व्यासपुत्रः, कीरश्च । कात्यायनी पार्वती । कालकण्ठः शिवः मयूरश्च । लक्ष्मणा कलंकेन सारसपक्षी च (सारसस्य तु लक्ष्मणा–अमरः) । क्रौञ्चभेदः पर्वतच्छेदः क्रौञ्चपक्षी च । सुदर्शनं चक्रं, शोभनं च । जलजं शङ्खः कमलं च । आदिकाव्यं वाल्मीकिरामायणम् । सुन्दरकाण्डः प्रकरणविशेषः रमणीयकुञ्जश्च । पवनजातः हनूमान् वायुबृन्दं च । रङ्गभुवं रङ्गमञ्चं रङ्गक्षेत्रं च ।

अभिसरणं कान्ताभिगमनं प्रसरणं च । सह्यभवां सह्यकन्यां । असह्यभवां भवच्छेदिनीं । चक्षुष्या दृश्या । श्रुतिगम्या श्रव्या

पृ. श्लो.

वेदोदिता च। अभंगुर=अनश्वर; भङ्गः तरङ्गः। अत्र अभिसरणेत्यादिषु विरोधाभासः।

19 ६६ मरुता वर्धत इति मरुद्वृधा कावेरी (कवेरकन्या)।

६७ यावदिमे कावेरीवारिपावनाः पवनाः सञ्चरन्ति तावद्देशगतानां जीवानां सनकादिदुर्लभं निःश्रेयसं भवति। 'कावेरीतोयमाश्रित्य वातो यत्र प्रवर्तते। तद्देशवासिनां मुक्तिः, किमु तत्तीरवासिनाम॥' इति भावमनुवदति।

20 ६९ नदीमतल्ली श्रेष्ठनदी। हल्लकं रक्तकमलं। ६८-६९-७०-श्लोकत्रयेप्युत्प्रेक्षा।

ग अमृतभरं पीयूषं, जलसंघश्च। पतिव्रतौचिती भर्तृभूतसमुद्रसाम्यम।

121 ७१ व्रीडशब्दः पुल्लिङ्गोऽपि।

७६ आचार्याणां दृष्ट्या मायामवधूय विष्णुपदं संप्राप्य मुक्तोपभोग्यां श्रियमाप्नोति जीवः इत्येष सिद्धान्तोऽत्र दर्शितः।

७७ तमोनिवृत्त्यै मणिमन्दिरमयूखा एवालम्। दिनान्तदीपास्तु केवलं गृहदेवताप्रीतिसंपादनफला भवन्ति।

122 ७८ सुमनसः देवाः विद्वांसश्च। उदारनेत्रोपचयं सहस्रनेत्रत्वं उदारनायकेन भगवता अभिवृद्धिं च। वज्रं इन्द्रायुधः हीरकं च। वसुभिः अष्टवसुभिः धनैश्च।

७९ काननेषु=कस्य ब्रह्मणः आननेषु मुखेषु। अरण्येषु बृहदारण्यकादिषु वा।

८० कावेरीवारीणि मधुमधुराणीति तात्पर्यम्।

८२ ब्राह्मणसमूहः अनेकदेवतारूपो भाति। श्रीमान् लक्ष्मीवान् नारायणश्च। गिरीशः वागीशः शंकरश्च। विधाता अनुष्ठाता ब्रह्मा च। श्रीदः उदारः कुबेरश्च। शुचिः पवित्रः अग्निश्च।

[illegible] सिद्धान्ती

पृ. श्लो.

यमश्च । प्रभाकरः तेजस्वी सूर्यश्च । सतां सहायः सत्पुरुषोपकारी चन्द्रश्च । श्रीमानित्यादीनि पदानि तत्तद्देवतापराणि, ब्राह्मणादिष्वप्यर्थान्तरपराणि च ।

८३ शाखिगणः वृक्षसमूहः । वैदिकशाखाध्यायिबृन्दश्च । पुन्नागभावं समुपेत्य — पुन्नागवृक्षस्सन् अशोकरूपं धत्ते इति वैचित्र्यम् । अन्यत्र पुरुषश्रेष्ठत्वं शोकरहितत्वं च ।

८४ सौधः सुधाचारुतरस्वमूर्तिः — गौरः सुधापरिष्कृतश्च । कपर्दी जटावान् जटिलः ।

८५ नभोमणिं सूर्यं । प्रासादानां तरूणां च अत्यौन्नत्यं असंबन्धेऽपि संबन्धरूपया अतिशयोक्त्या वर्णितम् ।

८६-८७ अणूदरीणां स्त्रीणां । पूर्ववदतिशयोक्तिः ।

124 ८८ जैवातृकः चन्द्रः । चन्द्रमण्डलं नवनीतपिण्डतुल्यमित्युक्तम् । समयन्—सम इवाचरन् अनुकुर्वन्नित्यर्थः ।

८९ सौम्यत्वं सुन्दरत्वं बुधत्वं च । अरुणत्वं रक्तत्वं सूर्यत्वं च । गुरुत्वं पीनत्वं बृहस्पतित्वं च । मान्द्यं मन्दतां शनैश्चरत्वं च । कलानिधित्वं वैदग्ध्यं चन्द्रत्वं च । कविता कवित्वं शुक्रत्वं च । रसोदितत्वं शृङ्गारादिरसमयत्वं भौमत्वं च । श्रीरङ्गविलासिनीनां अङ्गेषु बुधादिग्रहारोपमूलकः उल्लेखालंकारः ।

९० उज्जयिनी जयशालिनी नगरी च । मायामयं शून्यमयं, मायानगरी च । अदोविभूषा मध्यभूषा काञ्ची मेखला, नगरी च । दृक् विशाला आयता, नगरी च । उरोजकुम्भः कुचः महोदयात्मा पृथुलः, कान्यकुब्जनगरी च । मधुरा रसोद्वेला, नगरी च । पूर्ववदुल्लेखालंकारः ।

९१ वनं जलं काननं च । नीलाब्जं कुवलयं । इनेन सूर्येण ।

पृ. श्लो.

९२ चक्राकृती चक्राकारौ चक्रवाकौ च। चन्दनमेव चान्द्रिका तस्यां। अव्याहतायां अखण्डितायां।

९३ 'कातराक्षीकदम्बदम्भेन' इत्यविच्छिन्नपदं। अम्बुराशिना एकैव लक्ष्मीर्दर्शिता। अनया तु कमलासहस्रमिति पत्युरतिशयः।

। पञ्चमस्तबकव्याख्या समाप्ता।

## (षष्ठस्तबकः)

126 ३ सारसबन्धुसैन्धवः = सूर्याश्वः। सालः प्राकारः।

४ सुमं पुष्पं। 'वचोविशेष' इत्येकं पदम्।

५ धारागृहकमिव आचरन्तीति धारागृहकायमानाः भूनिवासाः तेषु। अम्भोरुहसंभवः ब्रह्मा, तस्य समस्तप्रपञ्चचित्रावल्या शोभितभित्तिकम्।

६ प्रणतस्य स्मरद्वेषणस्य शिवस्य शेखरः चन्द्रः तत्कान्तिद्रवीभूत-चन्द्रकान्तखचितस्थलम्। विश्वसृट् ब्रह्मा तद्रथः हंसः तस्य इन्द्रनीलस्तम्भे मेघभ्रमात् त्रासः।

७ पाकवैरी इन्द्रः। तस्य दृशः लोचनानि।

९ बलद्विषत् इन्द्रः तस्य वारिरुहानना पत्नी इन्द्राणी (अत्र पद्येषु लक्ष्मीमन्दिरविषयत्वात् इन्द्राणीप्रभृतिस्त्रीणां यथायोग्यपरि-चरणपरत्ववर्णनम्)। पावकः अग्निः तस्य पक्ष्मलेक्षणा स्वाहादेवी।

१० पाशायुधस्य वरुणस्य सारसेक्षणा पत्नी। शयाम्बुजं=करकमलं। 'कार्यकल्पना' इति पठितव्यम्। मरुत्पुरन्ध्रिका वायुपत्नी।

११ विरिञ्चजाया सरस्वती। सर्वमङ्गला पार्वती। पौलस्त्यविलासिनी कुबेरपत्नी। कृतान्तकान्ता यमपत्नी।

129 १६ पाथोजलोचनः पुण्डरीकाक्षः रङ्गनाथः।

पृ. श्लो

130 २२ अब्जगेहदैवतं सत्यलोके चतुर्मुखाराधितत्वात्।

ग अत्र वर्णसाम्यात् अम्भोदडिम्भादीनां श्रीरङ्गनाथः, तुषारशैलशिखरादीनां च फणिपर्यङ्कः (आदिशेषः) उपमेयम् इति मालोपमा। 'पदाभ्यधिक' मिति पठितव्यम्।

131 २३ वृत्तं छन्दः चरित्रं च। परं पुमांसं पुरुषान्तरं भगवन्तं च।

२४ चञ्चललोचना शिरोमणिभूता रमणीव तत्कृपा यद्वरणदाम माधवकण्ठे अर्पितवती तद्बुद्धिं वितन्वतीं मालां स आचार्यः आददे। २६ पारीन्द्रः सिंहः।

132 ग प्राचीनफणितौ वेदे। योगे वैशेषिके सांख्ये मीमांसायां गुरुमते प्राभाकरमते अद्वैतसिद्धान्ते विशिष्टाद्वैतमते इत्यादि यथाक्रमं ज्ञेयम्।

134 ३६-३७-३८—रङ्गनाथरङ्गनायकीवितीर्णयोः 'वेदान्ताचार्य' 'सर्वतन्त्रस्वतन्त्र' बिरुदयोः अनेकधा साम्यवर्णनम्। शार्ङ्गिणः शंखचक्रयोरिव कुञ्जरस्य दन्तयोरिव वादसाम्राज्यलक्ष्म्याः चामरयोरिव कथकविजयलक्ष्म्याः ताटङ्कयोरिव कीर्तितरुण्याः स्तनयोरिव अस्य विद्यापयोधेः तयोः बिरुदयोः शोभा बभूवेति भावः।

ग अत्र देशिकप्रणीतप्रबन्धरत्नानां नामानि निर्दिश्यन्ते।

136 ग प्रकटितजडिमानं प्रकटितः जडिमा शैत्यं मान्द्यं च येन तम्। सुरभिलशरः मन्मथः। कलम्बः बाणः। अर्णोरुहवैवर्ण्यकर्णेजपः कमलमालिन्यसूचकः।

137 ४१ समयचक्रमेव समीरः। सत्पथः आकाशमार्गः नियतमार्गः। तरणिः सूर्यः नौका च अस्तः (अस्ताचलः) एव शिला। रश्मिः किरणः रज्जुश्च।

४३ प्राप्तरजोऽनुषङ्गां परागान्वितां रजस्वलां च। आशाविततिः दिक्समूहः अभिलाषपरंपरा च। अनुतापयुक्तः प्रतापयुक्तः

पृ. श्लो.

पश्चात्तापयुक्तश्च। यथा कामुकः रजस्वलां प्रति सुरताभिलाषं प्रकाश्य करेण तामाश्लिष्य पश्चात्तापयुक्तः समुद्रस्नानं करोति, स एव व्यवहारोऽत्र श्लेषानुप्राणितरूपकेण सूर्ये दर्शितः।

४४ 'अपराम्भोधि' 'कृतस्थिते' रिति पठितव्यम्। श्यामतया अपरांभोधितरङ्गैस्सह मधुसूदनाङ्गसादृश्यम्। कौस्तुभमणेश्च कान्त्या अतुषाररश्मि (सूर्य) सादृश्यम्।

ग प्राचेतसहरिद्वरारोहावदनार्हा वरुणपत्नीमुखार्हा।

138 ग ककुभां दिगङ्गनानां। कौशिकः विश्वामित्रः उलूकश्च। पांसुलान्तौ रदौ यस्य; पांसुलाभ्यः पुंश्चलीभ्यः अन्तरं अवसरं ददाति। अरयः शत्रवः, अरिणः चक्रवाकाः। प्रदोषः निशामुखं, प्रकृष्टदोषवांश्च। पुण्यजनः राक्षसः शुद्धात्मा च; अत्र विरोधाभासः।

४५ सन्ध्यारागच्छलेन उत्पन्नानां गगनतरुपल्लवानां ग्रसनाय समवेतं कोकिलसमूहमिव जनैः गहनं तमोऽदर्शि।

४६ सूर्यरामयोः तिमिररावणयोः सन्ध्यासीतयोः जलधिकाननयोश्च सादृश्येन श्लिष्टपरंपरितरूपकं अस्तमयवर्णनम्।

ग निर्जरपथः आकाशः। मीनः मत्स्यः मीनराशिश्च। काव्यं कवेः कर्म, काव्यः शुक्रः। चित्रशिखण्डिजातः सुन्दरमयूरवर्गः सप्तर्षिमण्डलं च (बृहस्पतिर्वा)। रोहिणी वसुदेवपत्नी रोहिणी-नक्षत्रं च। मन्दस्पर्शनः मन्दमारुतः शनैश्चरश्च। श्रवणं श्रोत्रं श्रवणनक्षत्रं च। रेवत्याश्लेषोदयः (बलराम) पत्नीपरिष्वङ्गप्राप्तिः रेवत्याश्लेषानक्षत्रयोरुदयः। सन्तमसमलिनोऽपि घनतिमिर-कृष्णोऽपि, सन्दर्शितरक्ताङ्गः इति विरोधः — सन्दर्शिताङ्गारक-ग्रहः इति परिहारः। खद्योतः ज्योतिरिङ्गणः सूर्यश्च। मालोपमा।

पृ. श्लो.

139 ४७ सन्ध्यायां कुंकुमस्य खद्योते सौगन्धिकस्य तमिस्रे चिकुरस्य असिताब्जे ईक्षणस्य ताराद्युतौ च कनकस्य आरोपः। अम्बरं आकाशः वस्त्रं च। श्यामा रात्रिः षोडशवर्षीया कन्या च। करः किरणः हस्तश्च। रागः रक्तिमा अनुरागश्च। इति श्लेषः तस्मादत्र श्लिष्टपरंपरितरूपकम्। नायकनायिका व्यवहार-समारोपाच्च समासोक्तिः।

४८ वियत्क्षेत्रे तारात्मनां कलमांकुराणां दृष्टिदोषो माभूदिति-सन्ध्याकालः चन्द्रात्मना धवलकुम्भमतनोदिव। चन्द्रोदय-स्संजात इति तात्पर्यम्। उत्प्रेक्षा।

४९ वियति सागरस्य, किरणसमूहे जालस्य तमसि मीनगणस्य आरोपः चन्द्रमसि धीवरारोपकारणमिति परंपरितरूपकम्।

ग विष्णुपदं आकाशः वैकुण्ठं च। संख्यावदग्रेसराः विद्वद्वराः।

५० विभुचरणरक्षाविषयकं भगवत्पादुकाविषयकं। शौरेः रङ्गनाथस्य।

ग बलाहकचन्द्रादीनां सौदामिनीचन्द्रिकादयः वर्षजगत्तोषणादिषु इव, सामर्थ्यजनने भगवदनुकम्पा आचार्यस्य सहकारिणी।

141 ५२ सहस्रश्लोकनिर्माणप्रतिज्ञा तावत् द्रुतं पूर्ति गता; रात्रिस्तु मन्दं मन्दमपूर्यत।

५३ कुमद्वतीपरिबृढः चन्द्रः। भवितुमिच्छुः बुभूषुः। उत्प्रेक्षा।

५४ हरिदश्वः सूर्यः। सूर्योदयस्समुपस्थितः इति तात्पर्यम्।

५५ सूर्याचन्द्रमसोः क्रमात् चक्रशंखसादृश्यं वियति अच्युतारोपाङ्ग-मिति उपमालंकारः।

५६ द्विजराज-गोकुलं ब्राह्मण-धेनु-वर्गः, चन्द्र-किरण-समूहश्च। जलजातं कमलं जडजातं च। रागः पक्षपातः रक्तिमा च। विष्णुपदं परमपदं आकाशश्च। गोब्राह्मणविरोधिनः जडेष्वर्पित-

पृ. श्लो.

धनस्य च कामिनः (नरकार्हस्य) वैकुण्ठप्राप्तिराश्चर्यायेति प्रथमार्थः। अन्यः स्पष्टः।

142 ५७ पवनस्य शैत्यसौरभ्यमान्द्यानि सूचितानि।

५८ ब्रह्मा, सरस्वती, नारायणश्च पादुकासहस्रपद्यानां स्तोत्राय समर्था भवेयुः, नत्वितरे।

५६ विषादं दुखं, विषभक्षकं शिवञ्च।

६० शान्ताभिख्यः शान्तकान्तिः, शकारान्त 'ताराधीश'नामेत्यर्थान्तरम्।

६३ तार्किकैः संयोगस्य अव्याप्यवृत्तित्वमाम्नायते। आचार्यदया-स्रोतसां संयोगस्तु व्याप्य वर्तत इति वैचित्री।

६४ अत्र वीप्सावृत्त्याम्रेडितप्रतिबिम्बनविभाषामूर्त्यादिशब्दाः लक्षणया एकार्थबोधकाः।

144 ६६ सभायां समस्यासहस्रं समापूर्य 'समस्यासहस्री' पदं भेजे आचार्यवर्योऽसौ। स्वयमेव निर्दिशति चैतत् स्तोत्ररत्नव्याख्यान्ते —'अगणि सदसि सद्भिर्यस्समस्यासहस्री'ति। ग्रन्थोऽयं लुप्तः।

ग मातरिश्वन् वायुः। पतगेश्वरः गरुडः। अश्वानां समूहः अश्वीयम्। कलशजनुषः ककुभं=अगस्त्यस्य दिशं दक्षिणदिग्भागं।

145 ६७ अभीतिनुतिं अभीतिस्तवम् (२६ श्लोकात्मकं)–एतत् हृद्यं स्तोत्रं सर्वे संकटकाले अभयसिद्ध्यै पारायणं कुर्वन्ति।

"कलिप्रणिधिलक्षणैः कलितशाक्यलोकायतैः
तुरुष्कयवनादिभिः जगति जृम्भमाणं भयम्।
प्रकृष्टनिजशक्तिभिः प्रसभमायुधैः पञ्चभिः
क्षितित्रिदशरक्षकैः क्षपय रङ्गनाथ क्षणात्॥"

(स्तोत्रे २२ तमः श्लोकः)

६९ व्यासाचार्यापरनामकैः सुदर्शनार्यैः अर्पितां श्रीभाष्यस्य व्याख्यां 'श्रुतप्रकाशिकां' स्वशिष्येभ्यः असौ उपदिदेशेति भावः।

पृ. श्लो.

146 ग पाशायुधीयशुद्धान्तशातोदर्यः वरुणपत्न्यः जलाधिपतित्वेन वरुणस्य निर्देशः। मधुमथनं अमृतमथनं। निधिपक्षे शंख-मकर-कच्छपाः निधिविशेषाः (कुवेरनिधयः – महापद्मश्च पद्मश्च शंखो मकरकच्छपौ। मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नव॥) अन्यः स्पष्टः। भुवनं लोकः जलं च। पुष्कलाश्च आवर्तकाश्च केचिन्मेघश्रेष्ठाः। आवर्तानां पौष्कल्यं समुद्रपक्षे। कल्पान्तः प्रलयकालः कङ्कटीकः शिवः।

147 ७१ श्रुतिकिरीटविद्यागुरुं वेदान्ताचार्यं। मणिरेव क्रमुकः; शुक्तिकैव फणिलतादलं ताम्बूलपत्रं; लहर्येव करः; फेन एव शाटी; रवो मन्त्र; इति अम्बुधेः आचार्यपूजासामग्री रूपकव्याजोक्तिभ्यां वर्णिता।

७२ काषायचेल–कमण्डलू -दण्ड-प्रेषोक्त्यादिभिः अम्भोनिधेः अपार-गुणाम्बुधिं गुरुवरं वीक्ष्य लज्जया संन्यासग्रहणं उत्प्रेक्ष्यते।

148 ७५ सेतौ शुण्डादण्डोत्प्रेक्षायाः, अहंसि कदलिकारोपः अब्धौ च हस्त्यारोपः अङ्गमिति रूपकोत्प्रेक्षयोस्संकरः।

७६ गुरूणां कूटस्थं=शठकोपमुनिं ( परांकुशगुरुम् )।

७८ वृषशैलः वृषभाचलः (अत्र हरिः सुन्दरबाहुः)।

150 ८७ उरगशायि महः = शेषशायि विष्णुरूपं तेजः।

ग मरुदात्मम्भरीन् सर्पान्। विश्वविद्यास्वतन्त्रता सर्वतन्त्रस्वतन्त्र-त्वम्। 'वितथालाप' इति पठितव्यम्।

151 ८८ शकुन्तपतिः गरुडः। अन्तराकलयन् ध्यायन्।

152 ९१ पाशोपमत्वं प्रथयांबभूवुः = रज्जुतुल्यतां भेजिरे।

९२ आचार्यधौरेयमनोः महिम्ना=गुरुश्रेष्ठस्य मन्त्रप्रभावात्।

९३ गरुडदण्डकमिति प्रख्यातं स्तोत्रम्।

पृ. श्लो.

153 ग सामजः गजः । अत्यवीवहत् अतिवाहयामास ।

९८ वरदः आचार्यतनुजः कुमारवेदान्ताचार्य इति नयिनराचार्य इति च व्यवह्रियते । कल्यब्दे ४४१७ तमे नलसंवत्सरे काञ्च्यामस्यावतारः ।

९९ 'श्रीमल्लक्ष्मणयोगीन्द्रसिद्धान्तविजयध्वजं ।
विश्वामित्रकुलोद्भूतं वरदार्यमहं भजे ॥'

इति श्लोकार्थः अत्र निर्दिश्यते ।

154 १०० विरुन्धानः विरोधी । आचार्यस्य 'अधिकरणसारावली' ग्रन्थस्य व्याख्या 'अधिकरणचिन्तामणिः' वरदविरचिता ।

१०१ यथा पयोधौ सलिलमानुषः मज्जनोन्मज्जनरूपकेलीरतो भवति, आचार्यस्य मानसं च तथैव तुष्टिसागरे आसीत् ।

१०२ रहस्यत्रयसारः — अष्टाक्षर-द्वय-चरमश्लोकाख्यानां प्रायशः मन्त्रकल्पानां रहस्यानां सारार्थविवरणं अस्मिन् ग्रन्थे निर्दिश्यते । अत्र चतुर्भिर्भागैः विभक्ताः द्वात्रिंशदधिकाराः वर्तन्ते ।

ग 'जनतासंताप' इति पठितव्यम् । भुवनं जलं लोकश्च । पुण्डरीकाक्षान्वयभूषणं कमलबीजमालालंकारं पुण्डरीकाक्षवंशावतंसं च । अनन्तसूरि=अनन्ताः सूरयः (अनन्तः शेषः सूरयः नित्याः वा), आचार्यपिता च ।

पृष्ठम् 155

ग. विविधागमगिरिपरिचयं विविधदुर्गमपर्वतप्रणयं, विविधवेदवाचि अभ्यासं च । वर्णक्रमः जातिक्रमः अक्षरक्रमश्च । जटा व्रतिनः शिखा, वेदपाठविशेषश्च । चर्चा लेपनं; वादश्च (चर्चायां अञ्चितः अतिशयः येन) यामुनसारस्वतप्रवाहः यमुनासरस्वत्योः प्रवाहः, यामुनाचार्यवाङ्मय-

प्रवाहश्च। लक्ष्मणः सौमित्रिः श्रीरामानुजश्च। मूलेन मनुना आदि-राजेन, अष्टाक्षरमन्त्रेण च। तारं नक्षत्रं प्रणवश्च, समन्त्रराजनिष्ठं मन्त्रसहितराजन्यधीनं, मन्त्रराजे द्वयाख्ये मन्त्रे निष्ठया सहितं च। मुख्यया वृत्या अभिधया, ब्राह्मणोचितया जीविकया च। मुक्तावदातं मुक्ताभिः परिशुद्धं, मुक्तजनवत् निर्मलं च। सूत्रे तन्तौ ब्रह्मसूत्रादौ च। कल्याणं हिरण्यं मङ्गलं च। विद्याधरः उपदेवविशेषः विद्यानां धारकश्च। अहितापनयनं अहीन् तापं नयति गरुडः, अहितान् अपनयति दूरीकरोति गुरुः। धर्मजातः युधिष्ठिरः धर्मजातं धर्मसमूहः। आशयः मध्यप्रदेशः हृदयं च। सुनीतिः ध्रुवमाता, सुनीतौ शुभनीतौ। सुदेष्णाजानिः विराट-राजः (सुदेष्णा विराटराजमहिषी) तस्य उत्तरः उत्तरा च द्वे अपत्ये; उत्तरोत्तरं अधिकाधिकं। प्रतीपादयोऽलंकाराः, प्रतिवादिनां आक्षेप-निवारिकाभिः प्रौढोक्तिभिः परिपूर्णं, दुरूहाणां कल्पनानां चमत्कारविशेषेण प्रकाशितं, भ्रान्तिमतामनन्वयेन असंबन्धेन विलसितं च। पद्मिनी कमलिनी कामिनी च। अपरागोदयानुषङ्गिणं अपगतरक्तिमाभ्युदय-संबद्धं, परेष्वपराधरहितं (अपरागोदयाः शुद्धात्मानः तेषु संबन्धः अस्येति वा)। निजपक्षं बर्हं, आत्मपक्षं च; विचित्रं चित्रविशिष्टं, विलक्षणं च। दक्षिणा यज्ञे दानं; कीर्तिश्च। अक्षीणधर्मचरणं अक्षीणपुण्याचारं च। नरकः नरकासुरः, नरकलोकश्च; मधुरायां उदितं मधुरवचनं च। समीरकुमारः हनूमान्। अक्षः रावणकुमारः इन्द्रियं च। भवादिसंवत्सराः, भव-विभवस्य संसारवैभवस्य पराभवः यस्मात् तेन आनन्देन शालते शोभत इति शाली। धर्मविरोधिपराक्रमशीलकामविकृतिषु विजयान्वितम्। साधुवासना शोभनगन्धः सत्पुरुषाभिलाषश्च।

पृष्ठम् 156

ग. कीर्तिः पङ्कः यशश्च। भृगुव्यासः तटविस्तारः; भृगुव्यासौ च महर्षी। विशुद्धहेतुः धूमादिविपक्षात् ह्रदादेः व्यावृत्तः,सत्प्रतिपक्षरूपः हेत्वाभास-भिन्नश्च; आचार्यविपक्षात् विरोधिपक्षात् व्यावृत्तं, असतां प्रतिपक्षं प्रति-

द्वन्द्विनं च। तर्कादयः षोडशपदार्थाः न्यायादिमसूत्रे सूचिताः; न्यायसूत्रस्य प्रयोजनं संशये निर्णयः प्रमाणस्य निष्कर्षश्च। शृङ्गारमिवेति—शृङ्गारश्शुचिरुज्ज्वल इति कोशोऽनुसंधेयः। श्रीफलं बिल्वफलं। जपा जपाकुसुमं। अधिगतमहायज्ञाङ्गं-महद्भिः यज्ञाङ्ग (उदुम्बर) वृक्षैस्सहितं, अधिगतानि (पञ्च) महायज्ञानां अङ्गानि येन तं। वाक्यमिव आकांक्षा पदार्थानां परस्परसापेक्षत्वं, योग्यता संबन्धार्हत्वं, आसत्तिः पदानां सामीप्यं; आचार्यपक्षे मोक्षे आकाक्षां तदनुगुणयोग्यता एतत्संबन्धेन शोभितम्। तीर्थाः विद्वांसः गङ्गादयश्च। महती नारदवीणा; गीतानुगुणा गेया गीताशास्त्रानुसारिणी च। धिषणायाः धर्मभूतज्ञानस्य वितानं मोक्षे पूर्णविकासः; गुणाष्टकसिद्धिसाकांक्षं —

'ग्रहणं धारणं चैव स्मरणं प्रतिपादनं।
ऊहापोहार्थविज्ञानं तत्त्वज्ञानं च धीगुणाः॥'

इत्येतद्गुणाष्टकं अत्र ग्राह्यम्। आचार्योपि, "एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः" इति गुणाष्टके सिद्धिं आविर्भावं अपेक्षते। सावित्रीप्रथमचरणे 'वरेण्य' पदमस्ति; अन्यत्र 'आचार्यवरेण्य' इति बिरुदप्रयोगेण विख्यातं। परब्रह्मपदत्राणभावं विष्णुपादुकात्वं 'परं ब्रह्म' पदरक्षकत्वं च। कुशलैः वादिभिः प्रशंसितकीर्तिः आचार्यः। विरूपाक्षपारम्यं विरूपाक्षाख्यराक्षसमाहात्म्यं; 'शिवः परमः' इति भावं च। उद्यानकुहरं उद्यानगहनं; प्रभाकर-गोकलापः सूर्यकिरणसमूहः प्रभाकरवाक्प्रपञ्चश्च। गोकुलमिव कपिलालापभेदकुशलं प्रचलितपशुपतिवादं च—'कपिला' इति उत्कृष्टा गोजातिरस्ति ('कारांपशु' इति द्रमिडभाषायामस्या नाम) तद्व्यवहारेण परस्परभेदे कुशलं, गोकुलक्षेत्रे गोपानां पशुपतीनां वादः व्यवहारः प्रचलति च; गुणाश्रयं गुणानां रूपादीनां ज्ञानादीनां च आश्रयं। द्रव्यस्य भावः द्रव्यत्वं; द्रव्ये भावं धनासक्तिं (पूर्वत्र विरोधः अपरत्र परिहारः)। लोकबन्धुः

सूर्यः; तमसा राहुणा अज्ञानेन च। छाया सूर्यप्रिया तया योगः; छाया कान्तिः तया अयोगश्च। सुमनसः पुष्पाणि विद्वांसश्च; रजः परागः गन्धः सौगन्ध्यं रजोगुणसंबन्धश्च। स्मृतिः संस्कारजन्यं ज्ञानं, धर्मशास्त्रं च; अनुभवः इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं, अनुभूतिश्च। सुमतिः राजा सुबुद्धिश्च—विशालैश्वर्यानुभवसस्पृहः किलासीत् स राजा; गुरुस्तु तन्निस्स्पृहः।

पृष्ठम् 157

ग. कल्पकः वृक्षः कल्पनानिपुणश्च। स्वर्गादिनिष्कामः आचार्यः। पल्लवः किसलयं शृङ्गारलीला च। कलिका कुड्मलं कलिरेव वा कलिकः। सत्कृतिषु सद्रचनासु, सत्कृतौ परैः आत्मपूजने। कर्मधारयः समासविशेषः, कर्मधारया कर्मपरंपरया। द्वन्द्वः समासविशेषः, सुखदुःखादिरूप द्वन्द्वं सहते। समाख्येति—श्रुतिलिङ्गेति मीमांसासूत्रे उत्तरोत्तरदौर्बल्यमुक्तम्, अतः समाख्यादेः श्रुत्यपेक्षया न प्राबल्यमिति विरोधः, आचार्यस्तु समाख्यादिमान् श्रुतिप्राबल्यवादी च। योगनिरतः यमनियमौ समाश्रयति, अनेन तु निराकृतो यमस्य नियमः। यस्सामादीन् उपायानवलम्बते स दानभेदौ कथं पराकरोति इति विरोधः, दानस्य भेदनं पराकरोति इति परिहारः। कृष्णवर्त्मा वह्निः कृष्णभक्तश्च; शीतलात्मा शीतलस्य भावः पूर्वत्र विरोधः अपरत्र परिहारः। समवर्ती यमः समानवृत्तिश्च। परित्यक्तपरहिंसाव्यापारत्वे यमे विरोधः समानवृत्तौ परिहारः। गुरुः बृहस्पतिः आचार्यश्च; काव्यः शुक्रः, काव्यं कविकर्म, बृहस्पतौ विरोधः आचार्ये परिहारः। दोषज्ञः दोषद्रष्टा विद्वांश्च। गुणैकदर्शित्वे दोषद्रष्टरि विरोधः विदुषि परिहारः। विबुधकुञ्जरः ऐरावतः विद्वद्वरेण्यश्च; विदन्तं विगतदन्तं जानन्तं च। अवनीभृतां कटकं, पर्वतनितम्बं भूपालराजधानीं च 'कटकं वलये सानौ राजधानीनितम्बयोः' इति विश्वः। विमतबुधानां प्रतिकूलदेवानां विरोधिपण्डितानां च। सृष्टिभेदः सर्गान्तरं रचनाखण्डनं च।

पृ. श्लो.

158 १०५ वंशप्रदीपं वंशस्थितं प्रदीपं वंशस्य प्रदीपं प्रकाशकं च। मोहतिमिरक्षपणपूर्वकनिलीनपुरुषदर्शनफलमिति श्लिष्टपरंपरितरूपकालंकारः।

१०६-११३ श्लोकोद्वयेऽपि —

"वेदे संजातखेदे मुनिजनवचने प्राप्तनित्यावमाने
संकीर्णे सर्ववर्णे सति तदनुगुणे निष्प्रमाणे पुराणे।
मायावादे समोदे कलिकलुषवशाच्छून्यवादे विवादे
धर्मत्राणाय योऽभूत् स जयतु भगवान् विष्णुघण्टावतारः॥"

इति श्लोकस्य छायां पश्यामः।

११४ चतुराननः ब्रह्मा, मुखरश्च। वनजाते कमले वनसमूहे च। गिरीशः शिवः वागीशश्च।

163 १२८ देशिकानां जीविका निगमचूडा —

आचार्याणां जीवनभूतो वेदान्तः जयति,
तद्गुरुः वेदान्ताचार्यः जयति,
तदुक्तिः आचार्यसूक्तिः जयति,
तत्सूक्तिरससंजातहर्षः समाजश्च जयति।

इति

'श्रीकुमारवाडिस्वामी'ति विख्यात छन्दोग श्रीनिवासाचार्यस्य
तनयेन अनन्ताचार्येण कृता
श्रीवेदान्ताचार्यविजयटिप्पणरूपा व्याख्या समाप्ता
श्रीमते निगमान्तमहादेशिकाय नमः
श्रीमते श्रीनिवासमहादेशिकाय नमः
शुभमस्तु

---

|| श्री लक्ष्मीहयवदनपरब्रह्मणे नमः ||

|| श्रीमते निगमान्तमहादेशिकाय नमः ||



श्रीकृष्णब्रह्मतन्त्रपरकालमहादेशिकविरचिता

## श्रीमन्निगमान्तमहादेशिकप्राबोधिकस्तुतिः

शेषाद्रीश्वरपादपद्मयुगलीकैङ्कर्यहेतोः पुरा
या घण्टा किल भक्तिनम्रमनसा पद्मासनेनार्पिता ।
तत्तत्तन्त्रपिशाचधूननकृते सङ्कल्पतः श्रीपतेः
जाता यै निगमान्तदेशिकमिषात् कस्यै चिदस्यै नमः ॥ १ ॥

जिह्वासिंहासनाग्रस्फुटनटनतुरङ्गास्यमञ्जीरसिञ्जा-
स्पर्धानिर्धार्यवाचानिचयचुलकितप्रत्यनीकप्रचारः ।
श्रीमान् रामानुजार्यप्रथिततममतश्रीललामार्कधामा
नित्यं श्रुत्यन्तविद्यागुरुरिह जगतां भद्रवत्तां विधत्ताम् ॥ २ ॥

संसाराटोपतापक्षपणनिपुणवाग्धोरणीसारणीश्रीः
वाणीसंपूज्यपादादिमतुरगमहामन्दुराऽऽनन्दराशिः ।
संख्यातीतप्रबन्धप्रशमितविमतातङ्कशङ्काकलङ्को
मोदान्वेदान्तसूरिः दिशतु गुरुवरः सर्वतन्त्रस्वतन्त्रः ॥ ३ ॥

पादारविन्दयुगलीनतचेतनाघखेदापहारिकरुणादिगुणाम्बुराशे ।
मोदाय सर्वजगतां भवताग्निितान्तं वेतान्तदेशिकमणे तव सुप्रभातम् ॥

वैदुष्याद्यवलेपलेपपदवीसञ्चारदूरो गुरुः
नित्यं गन्धवहोऽस्म्यहं तु तदितो भीतेन भाव्यं मया ।
इत्थं मन्दगतिः सदागतिरिह प्राभातिको वात्यसौ
श्रीमन्नागममौलिदेशिकमणे ! स्यात् सुप्रभातं तव ॥ ५ ॥

तमोऽवश्यं नश्येत् प्रचुरमपि तत्तादृशगुरु-
प्रबोधे सञ्जाते न विशय इहास्तीति तमिमम् ।
नृणामर्थं सम्यक्प्रकटयदिव भ्रश्यति तमो
विबुध्यस्व श्रीमन् निगममकुटीदेशिकमणे ! ॥ ६ ॥

नित्यं पूर्णकलः कदाऽपि तमसा नैवाभिभूतो गुरुः
युक्तास्य द्विजराजता मम पुनर्नैवोचिताऽनीदृशः ।
इत्यस्ताद्रिगुहागृहेषु नियतं लीनो ह्रिया चन्द्रमाः
स्वामिन् श्रीकवितार्किकद्विपहरे ! स्यात्सुप्रभातं तव ॥ ७ ॥

महाभे सत्त्वाढ्ये वितमसि गुरौ जाग्रति तमो-
रुचीनामस्माकं कथमिह भवेत् सत्वमिति किम् ।
ह्रिया म्लानिं भानि द्यवि दधति सर्वाण्यतितरां
जहीहि त्वं निद्रां कविकथककण्ठीरवगुरो ! ॥ ८ ॥

एते द्विजा विपुलशाखमहाऽगमान्तनिष्ठाः प्रबोधमधिगम्य रुतच्छलेन ।
तत्त्वं परस्परमिव प्रतिबोधयन्ति श्रुत्यन्तदेशिकमणे तव सुप्रभातम् ॥ ९ ॥

अन्तर्हरौ लसति धामनिधौ प्रकाश-
मत्यन्तमेत्य जगतां जनयन् प्रबोधम् ।
प्राचीप्रदेश इह भाति भवानिवैषः
प्राचीनवाक्छिखरदेशिक ! जागृहि त्वम् ॥ १० ॥

तेजस्वितां दधदुदारतमो विधूय निस्नेहभावमुपगम्य दशावसाने ।
शान्तोऽद्य हन्त हरिपादसमर्पितात्मा दीपः प्रसन्न इव जागृहि देशिकेन्द्र

दलितारविन्दनयनस्सरोमुनिर्दधदुज्ज्वलालिकमलाक्षिमालिकाम् ।
हरिदर्शनं समभिकाङ्क्षति स्फुटं प्रतिजागृहि श्रुतिशिरोगुरूत्तम ! ॥

इदमभिगमोपादानेज्यामुखं परमार्हणं
तुरगवदनं ज्योतिस्त्वत्तोऽधिगन्तुमपेक्षते ।
तदिह समयः प्राप्तो योगोपसंहरणोचितो
भवतु भवतः सुप्रातं श्रीत्रयीमकुटीगुरो ! ॥ १३ ॥

इन्वेऽपयोगं कमलं प्रबुद्धयोगं प्रबुद्धो विनिवर्तय त्वम् ।
प्राप्तोऽद्य देवाभिगमस्य कालः श्रुत्यञ्चलाचार्यशिखामणे ते ॥ १४ ॥

गाढाविद्येव रात्रिर्विगलति विशदज्ञानवद्भानुतेजः
प्रोन्मीलत्यब्जबन्धुः जलजनयनवद्दृक्पथं याति मन्दम् ।
आनन्दं याति सान्द्रं मुनिसमुदयवत्कोकलोकस्समन्तात्
भूयो वेदान्तविद्यागुरवर भवतो दीप्रभास्सुप्रभातम् ॥ १५ ॥

एते शुद्धा विमलवसनाः सत्पवित्रोर्ध्वपुण्ड्राः
सन्ध्याजप्यप्रयतहृदया वैष्णवास्त्वन्नियोज्याः ।
त्वत्कैङ्कर्यप्रवणमतयः त्वत्प्रबोधप्रतीक्षाः
सुप्रातं ते निगममकुटीदेशिकेदं दिनं स्यात् ॥ १६ ॥

निद्रानुभूतिशबलैरमलैः कटाक्षैर्विद्राविताऽऽर्तिभिरुपाश्रितलोकरक्षैः ।
भद्राणि सर्वजगतां भगवन्विधातुं निद्रां विमुञ्च निगमाञ्चलदेशिकेन्द्र ॥

व्याकोचनेत्रनलिनं वदनह्रदं ते
लावण्यपूरभरितं ललितं विगाढुम् ।
काङ्क्षन्ति सर्वजनतानयनालिमालाः
कामं जहीहि कविवादिमृगेन्द्र ! निद्राम् ।। १८ ।।

भाष्यादिगूढतमतत्त्वबुभुत्सयाऽमी
श्रीब्रह्मतन्त्रयतिवर्यमुखा महान्तः ।
क्लृप्ताह्निकास्स्वनियमाः प्रतिपालयन्ति
त्वामागमान्तगुरुवर्य ! जहीहि शय्याम् ।। १९ ।।

भवतापपरिग्लपितां जनतामविता सविता विनतांबुरुहाम् ।
अवतात् कवितार्किकसिंहगुरोः कविताववनितालनितावसथम् ।। २० ।।

अगणेयमहासुगुणाम्बुनिधिं प्रगुणात्मगुणार्यगणाभिनुतम् ।
सुगमान् निगमान् कलयन्तममुं निगमान्तगुरुं प्रणमाम्युषसि ।। २१

सुदान्तं दुर्दान्तक्षपणनिपुणं तं नततते-
रनन्तं वेदान्तं स्फुटमुपदिशन्तं करुणया ।
महान्तं श्रीमन्तं गुणनिधिमनन्तार्यतनयं
प्रशान्तं मत्स्वान्तं श्रयतु निगमान्तार्यमुषसि ।। २२ ।।

कलयामि सूरिवलयार्चितं कृपानिलयं महःकुवलयामृतद्युतिम् ।
भ्रममौग्ध्यदूरतरमौज्ज्वलीनिधिं श्रममौढ्यहृन्निगममौलिदेशिकम् ।।

उपाश्रितद्युपादपं कृपावनम्रपावनं
सुपाणिपादपल्लवं व्यपास्तसर्वपातकम् ।
विभावरीशभावितप्रभाननं शुभासनं
सुभावनं विभावये त्रयीशिखाद्वयीगुरुम् ।। २४ ।।

माधवाराधनं बोधनश्रीधनं साधुयूथव्यथोद्भेदनिर्भेदनम् ।
वादियूथानतं वेदवादस्फुरन् मोदमीडामहे वेदचूडागुरुम् ।। २५ ।।

एतैः श्लोकैर्व्यलीकैः प्रगुणगुणगणं त्वां स्तुवंस्त्वत्सपर्या
श्रीकृष्णब्रह्मतन्त्रादिमपदकलिजित्संयमी संयतात्मा ।
वांछत्येतर्हि दीव्यत्तरणिघृणिगणप्रस्फुटाब्जच्छटान्तः
माध्वीसाध्वीभिरेनं स्नपय घनकृपापाङ्गधाराभिरारात् ॥ २६

विजयतां गुरुपङ्क्तिशिखामणिः
विजयतां यतिराजमतध्वजः ।
विजयतां कवितार्किककेसरी
विजयतां निगमान्तगुरूत्तमः ॥ २७ ॥

॥ इति श्रीमन्निगमान्तमहादेशिकप्राबोधिकस्तुतिः समाप्ता ॥

---

## श्रीवङ्गीशकुलकलशजलधिकलानिधेः
## छन्दोगश्रीनिवासाचार्यस्य दिव्यचरितम्

भारद्वाजकुलोद्भूतमपर्याप्तामृतात्मजम् ।
वन्देऽहं श्रीनिवासार्यं जन्मज्ञानप्रदं मम ॥ १ ॥

संग्रहेणात्र वक्ष्यामि चरितं तस्य धीमतः ।
विद्याभिर्यस्समस्ताभिः पतिरासीत्स्वयं वृतः ॥ २ ॥

युतैर्नवनवत्या च शतैस्सप्तदशैर्मिते ।
ईश्वराब्दे शके भाद्रे कन्यालग्ने शुभे तिथौ ॥ ३ ॥

अष्टम्यां चोत्तराषाढानक्षत्रे भानुवासरे ।
छन्दोगश्रीनिवासार्यो भुवि श्रीमानवातरत् ॥ ४ ॥

स्वमातुलकुलग्रामे कडल्मङ्गलनामनि ।
समधीतस्सामवेदः बाल्य एव महात्मना ॥ ५ ॥

विधायाध्ययनं सम्यगेकादश्यां शरद्यसौ ।
लब्धुमिच्छन्सदाचार्यं प्रतस्थे वारुणीं दिशम् ॥ ६ ॥

तर्कव्याकृतिसाहित्यमीमांसाद्वयलक्षणे ।
शास्त्रौघे नैपुणं चित्रं दर्शयद्भिर्यशस्विभिः ॥ ७ ॥

परमैकान्तिभिस्सद्भिर्विद्वद्भिस्समलंकृतम् ।
केताण्डपट्टिमागत्य हृष्टोऽभूद्वीक्ष्य स स्थलम् ॥ ८ ॥

जातस्तदा महान्मोदः श्रीनिवासस्य मानसे ।
स्वाभीष्टफलसंसिद्धिं करस्थामिव पश्यतः ॥ ९ ॥

अतितेजस्विनं तत्र शान्तमाचारकोविदम् ।
विरक्तिराघवाचार्यं संश्रित्य प्राणमत्सुधीः ॥ १० ॥

कपिस्थलं श्रीरङ्गार्यात् श्रीनिवासो महानथ ।
तर्कसाहित्यशास्त्रेषु वैदुष्यं समवाप च ॥ ११ ॥

श्रीरङ्गं च गते तस्मिन् राघवार्यमहागुरौ ।
श्रीनिवासो भरन्यासं कृतवानात्मनस्सुधीः ॥ १२ ॥

सामान्यशास्त्रमभ्यस्य श्रीरङ्गार्यगुरूत्तमात् ।
वेदान्तविद्यालाभाय स ययौ वेङ्कटाचलम् ॥ १३ ॥

कपिस्थलं देशिकार्यात् सोऽत्र ग्रन्थचतुष्टये ।
विद्वदग्रेसरात्प्राप प्रावीण्यं परमाद्भुतम् ॥ १४ ॥

त्रयाणां गुरुवर्याणां कटाक्षैः प्रतिबोधितः ।
मयूरपुरमागत्य वासं चक्रे महामतिः ॥ १५ ॥

विरक्तिगुरुवर्यस्य सप्ततिं प्राणयत्सुधीः ।
रसालङ्कारभरितामाचार्यगुणमालिकाम् ॥ १६ ॥

आचार्यसप्ततिस्सैषा राजते हृदयङ्गमा ।
प्रपत्तिशास्त्रविदुषां विस्मयानन्ददायिनी ॥ १७ ॥

श्रीमद्वैष्णवसिद्धान्तस्थापकस्य गुरोरसौ ।
ततश्चक्रे यतिपतेश्चम्पूं वैभवदीपिकाम् ॥ १८ ॥

एषा रसमयी प्रौढा चित्रालङ्कारभूषिता ।
सुवृत्ता ह्लादिनी चम्पूः कस्य वा न हरेन्मनः ॥ १९ ॥

आबालवृद्धं शास्त्रार्थं यथार्हं बोधयन्नसौ ।
न्यायाधीशादिकान् शिष्यान् लेभे पाण्डित्यवैभवात् ॥ २० ॥

विज्ञानं सर्वविद्यासु नैपुण्यं बोधने तथा ।
निशाम्य विस्मितास्तस्य प्रशशंसुर्जना मुदा ॥ २१ ॥

पञ्चकालप्रक्रियोक्तनित्यकर्माण्यशेषतः ।
आचरन्द्विजवर्योऽसौ सर्वेषां पूज्यतामगात् ॥ २२ ॥

प्रमाणभूतश्शास्त्रेषु संशयानां निवारकः ।
कुमारवाडिस्वामीति ख्यापयामास तं जनः ॥ २३ ॥

इत्थं त्रिंशत्स वर्षाणि मायूरनगरे वसन् ।
स्वादयामास सर्वेषां तत्त्वज्ञानाह्वयं मधु ॥ २४ ॥

चित्रभानौ ततः प्राप्ते कार्तिके मासि शार्ङ्गिणः ।
पदं प्राप त्रयोदश्यां श्रीनिवासः पिता मम ॥ २५ ॥

सुतौ द्वौ श्रीनिवासस्य सत्कैङ्कर्यप्रतिष्ठितौ ।
कनिष्ठोऽहमनन्तार्यः ज्येष्ठस्तु वरदस्सुधीः ॥ २६ ॥

श्रीमद्वात्स्यविरक्तिराघवगुरौ न्यस्तात्मरक्षाभरं
तस्मात् कौशिकदेशिकार्यगुरुतश्चाप्तागमान्तद्वयम् ।
धीवैराग्यमुखैर्गुणैः परिवृतं छन्दोगचूडामणिं
भारद्वाजकुलोद्भवं गुरुमणिं श्रीवाससूरिं भजे ॥ २७ ॥

श्रीमते श्रीनिवासमहादेशिकाय नमः

शुभमस्तु



# शुद्धाशुद्धपत्रिका

| PAGE | LINE | FOR | READ |
|---|---|---|---|
| 3 | 6 | रजः किम्मीर | रजःकिम्मीर |
| | 13 | तटी खेलन्मरु | तटीखेलन्मरु |
| | 16 | कांचन | काचन |
| 6 | 17 | विद्या गुरु | विद्यागुरु |
| 11 | 2 | दमचौष | दमघोष |
| | 17 | पटीयसा | पटीयसी |
| 12 | 11 | कतूहलितया | कुतूहलितया |
| 15 | 16 | रसज्ञः | रसज्ञाः |
| 18 | 14 | बलद्विषत्पुरी | बलद्विषत्पुरी- |
| 20 | 11 | कबरा | कवरी |
| 21 | 1 | तर्चाध्वगो | तर्काध्वगो |
| | 8 | व्रिहर्ति | विहर्ति |
| 23 | 8 | after सन्दोह | add सन्देह |
| 25 | 13 | द्रुतवर्ष | द्रुतवर्ष |
| 26 | 3 | after देशिक | add दयित |
| 28 | 16 | तस्म | तस्मै |
| | 17 | मञ्चरीं | मञ्जरीं |
| 29 | 17 | भारतीं | भारतीं |
| 30 | 4 | जलर्धिः | जलधिः |
| 31 | 3 | पुरो गिरि | पुरोगिरि |
| 35 | 7 | निखरेण | निकरेण |
| 36 | 11 | मध्ये पङ्कज | मध्येपङ्कज |
| 39 | 10 | क्षणादार्यां | क्षणदार्यां |
| | 19 | दुत्पला | दुत्पलाव |
| 40 | 3 | त्रयो शिखर | त्रयोशिखर |
| 42 | 16 | बिस्मयं | विंस्मयं |
| 49 | 18 | व्यकोचा | व्याकोचा |
| 60 | 6 | वाचा व्याकृत | वाचाव्याकृत |

| PAGE | LINE | FOR | READ |
|---|---|---|---|
| 71 | 12 | वचो दुग्ध | वचोदुग्ध |
| | 13 | कुलानाभिमतं | कुलानामभिमतं |
| | 14 | विदध्यात् | विद्ध्यात् |
| | 17 | वचः कैरव | वचःकैरव |
| 74 | 11 | कामः संघट्टन | कामसंघट्टन |
| 75 | 7 | शाठीं | शाटीं |
| 76 | 19 | निधौराज | निधौ राज |
| 78 | 4 | महींधर | महीधर - |
| 79 | 3 | वेंध्वा | वेद्धा |
| | 6 | विशदाप | विशदातप |
| 97 | 6 | कण्डूयन | कण्डूयन |
| 99 | 4 | पलित | पतित |
| 100 | 4 | तमो रविः | तमोरविः |
| 101 | 17 | निखर | निकर |
| 104 | 10 | विशेषान् | विशेषात् |
| 105 | 2 | वाहिनी जन्म | वाहिनीजन्म |
| 109 | 8 | सभान्तर | सभान्तरे |
| 116 | 7 | जीवं जीवो | जीवंजीवो |
| 124 | 12 | भद्रो विभूषा | भद्रोविभूषा |
| 125 | 4 | कदम्भ | कदम्ब |
| 128 | 7 | काय | कार्य |
| 130 | 15 | वचसामलम्बं | वचसामालम्बं |
| 131 | 3 | विबुधेन्धु | विबुधेन्दु |
| 137 | 11 | कृतस्मितेः | कृतस्थितेः |
| 148 | 1 | अंहः कदलिका | अंहःकदलिका |
| 150 | 14 | वितथालोप | वितथालाप |
| 155 | 20 | पुण्डरीकादि | पुण्डरीकादि |

